अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [१५]

पण्डितश्रीधर्मकुमारविरचितम्

# श्रीशालिभद्रचरितम् ।

माण्डलग्रामनिवासिश्रेष्ठिछगनलाल-वखतचन्दसाहाय्येन

प्राकाश्यं नीतम् ।

वीरसंवत् २४३६ ।

मूल्यं सपादरूप्यकम् ।





Published by Shah Harakhchand Bhurabhai Benares, Printed by Gauri Shanker Lal at the Chandraprabha Press, Benares City.

# यशोविजयजैनग्रन्थमालायामद्यावधि मुद्रिता ग्रन्था: ।

१. प्रमाणनयतत्त्वालोकालङ्कारः–जैनन्यायदर्शनस्यापूर्वोऽयं प्रवेशग्रन्थः, कर्ता चास्य श्रीवादिदेवसूरिः । मूल्यम् ०-८-०

२. हैमलिङ्गानुशासनम्–अवचूरिसहितम्–लिङ्गबोधकोऽयं मनोहरो ग्रन्थः । कर्ताऽस्य श्रीहेमचन्द्राचार्यः । ०-५-०

३. सिद्धहेमशब्दानुशासनम्-लघुवृत्तिधातुपाठादिसहितम्–व्याकरणे व्युत्पित्सूनां सरलोऽयं ग्रन्थः कर्ताऽस्य श्रीहेमचन्द्राचार्यः । २-८-०

४. गुर्वावलिः-श्रीमुनिसुन्दरसूरिरचिता-अस्यां श्रीमहावीरादारभ्य मुनिसुन्दरसूरिपर्यन्तं तपागच्छीयाचार्याणां संक्षिप्तमितिवृत्तम् । ०-८-०

५. रत्नाकरावतारिकायाः टिप्पणपञ्जिकासाहितायाः परिच्छेदद्वयम्–प्रमाणनयतत्त्वालोकालङ्कारस्य व्याख्यानरूपं रत्नप्रभाचार्यविरचितम् १-०-०

६. सिद्धहेमशब्दानुशासनम्-मूलमात्रम् । ०-५-०

७. जैनस्तोत्रसंग्रहः-प्रथमो भागः । ०-६-०

८. ,, द्वितीयो भागः । १-०-०

९. मुद्रितकुमुदचन्द्रप्रकरणम्-श्रीश्रावकयशश्चन्द्रकृतम् । ०-८-०

१०. क्रियारत्नसमुच्चयः-गुणरत्नसूरिरचितः-सकलवैयाकरणानामुपकारी । २-०-०

अर्हम्

# श्रीधर्मकुमारसुधियः ।



एते हि सिताम्बरजैनसाधवः श्रीधर्मकुमारसुधियः कदा कतमं भूपीठं भूषयामासुरित्यादिमीमांसाप्रवृत्तौ स्वयमनेनैव विदुषा स्वप्रणीतैतच्छालिभद्रकथापर्यन्तभागनिवद्धप्रशस्तौ स्पष्टतया सर्वं प्रदार्शितमस्ति। तथाहि—श्रीनागेन्द्रमुनीन्द्रगच्छे श्रीहेमप्रभसूरयस्तत्पट्टे च श्रीधर्मघोषसूरयस्तत्पट्टे पुनः श्रीसोमप्रभसूरयस्तत्पट्टे च विबुधप्रभप्रभवोऽभूवन्। तेषा निदेशमधिगम्य श्रीशालिभद्रकथामेतां वि. १३३४ वर्षे विरचयामासु श्रीधर्मकुमारपण्डिताः । एतेषा च ग्रन्थकर्तॄणा प्रौढप्रातिभता सर्वशास्त्राप्रतिवद्धप्रतिपत्ता चाध्येतृभिर्मनोहरपदसन्दर्भाया नवनवार्थोल्लेखिन्या विशिष्टालङ्कारशालिन्याः सर्वथा रसपीयूषवर्षिण्या हृदयङ्गमाया अस्याः काव्यकृतेरन्यथाऽनुपपत्त्यैव निःशङ्कमनुमास्यत-इति नात्रातिवक्तव्यमस्माकम् ।

संशोधनकर्त्तारश्चैतस्यास्त एव प्रद्युम्नसूरयोः येषां, श्रीविनयचन्द्रसूरिकृतं श्रीमल्लिनाथमहाकाव्यम्, श्रीप्रभाचन्द्राचार्यविरचितं श्रीप्रभावकचरित्रम्, श्रीदेवेन्द्रसूरिप्रणीत श्रीउपमितिभवप्रपञ्चकथासारोद्धारः, श्रीरत्नप्रभसूरिविहिता श्रीकुवलयमाला कथा, श्रीबालचन्द्रसूरि-निर्मिता श्रीउपदेशकन्दलीटीका श्रीविवेकमञ्जरीटीका चेत्यादितात्कालिकवहुग्रन्थाना संशोधकत्वेन ग्रन्थसंशोधननैपुण्यम्, श्रीसमरादि-त्यसंक्षेपादेः स्वतन्त्रं संविधानेन च शास्त्रवैशारद्यं च सुतरां प्रतीतम् । ये पुनस्तदानीन्तनाचार्यैर्बाढं संमानिता वभूवुरित्यपि श्रीमान-तुङ्गाचार्यविरचितश्रीश्रेयासनाथचरित्रान्तर्गतेन—

"शिष्यः श्रीकनकप्रभस्य सुकविः श्रीबालचन्द्रानुजो ज्यायान् श्रीजयसिंहतः प्रतिभया श्रीवस्तुपालस्तुतः ।

असद्गोत्रमहत्तरः कविगुरुः प्रद्युम्नसूरिप्रभुर्विद्वद्वृन्दकवित्वशोधनधनो ग्रन्थं मुदाऽशोधयत्''॥१॥ इति पद्येन व्यक्तमाविर्भवति।

कथा पुनरियं प्रथमादर्शे श्रीप्रभावकचरित्रप्रणेत्रा गणिना श्रीप्रभाचन्द्रेण व्यलेखि। "कथा नाम धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा" इति काव्यानुशासने (पा ३३८) श्रीहेमचन्द्रसूरिणोक्तत्वात् धैर्यशान्तत्वविशिष्टस्यैव नायकस्य कथाप्रयोजकतयाऽस्या पद्यगीर्वाणभाषानिबद्धकथाया शालिभद्रो धीरः शान्तश्च नायको ज्ञेय, धीरता शान्तता च तस्य वक्ष्यमाणतत्संक्षिप्तव्यतिकरेण स्फुटैव। तद्यथा-

आसीदिह जम्बूद्वीपे दक्षिणभरतक्षेत्रे मगधनाम्नि देशे शालिग्रामनामा ग्रामः, तत्र दारिद्र्योपतापसन्तप्तचित्ता धन्या नाम काचिद गोपालाङ्गना प्रतिवसति स्म। तस्या सङ्गमो नाम शुचिगुणमणिसद्मममभिलापुकस्तनयो बभूव। सा च वराकी विधवा धन्या परकीयधनिगृहे कर्माणि कृत्वा पुत्रं पोषयन्ती यथाकथञ्चिद् दिनान्यतिवाहयामास। क्रमशो गुणैर्वयसा च वर्धमानोऽसौ बालकः कुक्षिशम्बल स्कन्धे कम्बलं, पाणौ च दण्ड निधाय वत्सान् बहिर्ग्राम चारयामास। अन्यदा क्वचित्पर्वणि प्रतिगृहं जायमानं परमान्नं दृष्ट्वा कदन्नभोज्यसौ बालक स्वमातरं परमान्नं ययाचे। माताऽपि तमाचष्ट। अयि वत्स! कदन्नमात्रेऽपि दुष्प्रापे केयं नाम कथा पायसस्य। अथवा पुत्रो मा विषण्णो भूदिति मनसिकृत्य पुनरूचे। हे सन्तुष्टमनोवृत्ते! प्रसन्नवदनो भव तवाभिवाञ्छितमिदानीं पूरयामीति क्षणं बहिरगात्। दुष्पूरा च बालेच्छामभिमन्यमाना ध्यायन्ती चात्मवैधव्यदौस्थ्योद्भूतगहनगहनं निर्गच्छन्नेत्राश्रुधाराधाराधरधारापङ्क्तिलीकृतभूतला तारस्वरेण रुरोद। कारुण्यास्पदं च तन्निशम्य प्रातिवेश्मिकजनाः तामुपगच्छन्तः कथमङ्ग! इदं करोषि धन्ये! शान्तं शान्तममङ्गलमित्याथालेपुः। श्रुत्वा च तन्मुखाद्यथातथं व्यतिकरं पायससाधनानि सर्ववस्तूनि तस्यै समर्पयामासुः। अथ साऽपि प्रमुदिता तैः पायस निष्पाद्य क्षणाद्य बालमामन्त्र्य विशदपात्रे परिवेष्य बहिर्जगाम। इतश्च मासोपवासी कश्चिच्छ्रमण आहारार्थं समुपागच्छन् बालेन दृष्ट। सहसाऽभ्युत्थाय चोदञ्चद्रोमाञ्चकञ्चुक. प्रसादसुधाभरितविशदवदनसुधाकिरणोऽमु महर्षिं प्रणिपत्य वदति स्म। महाराज! एतद्विशुद्धममृताहारं गृहीत्वा मामनुगृह्णातु भवान्। मुनिरपि ज्ञाततदीयशुचिहृदय पायसं गृहीत्वा, धर्मलाभाशिषञ्चाभिधाय स्वाश्रयमाशिश्राय। इतो माताऽपि बहिष्टः समायान्ती उपविष्टमात्र भोज्यसमाप्त्या समाप्तभुक्तिक्रिय बालमा-

लोक्यानवगतपरमार्थस्वरूपत्वेन पुत्रमतिबुभुक्षाक्षामं विज्ञाय पुनः परमान्नं पर्यवेषयत्। न पुनरेतावति पायसे दत्तेऽपि बुभुक्षाऽस्य नोपशाम्यति, अपरञ्च स्वयमेवैककः सर्वमेतद्भोक्तुं विचेष्टत इति दध्यौ । अहो बालस्यापि पुनः कीदृक्षं धैर्यं यत्खलु मुनिदानव्यतिकराकथनेन मातापि मुनिदानफलोपलम्भे प्रतारिता। दत्ते च दाने मौनमुद्राऽतिदुष्करा। निर्धनेऽपि बालगोपालेऽस्मिन्नगृहीतधार्मिकाशिक्षे पशुचारणव्यापारसततव्यग्रमनस्त्वेन पशुप्राये इदं मौनम्, एष विवेकः, इत्थं धैर्यमलौकिकम्; तत्क्षणं च निरन्तरमुनिदानविमलध्यानसुधासरसि निमग्नः सङ्गमः सफलीकृतमनुष्यत्वसङ्गमः प्राणान् जहौ । इतश्च जम्बूद्वीपे दक्षिणभरतक्षेत्रे मगधमण्डले राजगृहं नाम नगरमराजत । तत्र श्रेणिको नाम राजा विललास। तत्रैव पुरे गोभद्रनामा श्रेष्ठी वसति स्म। तस्य च भद्रा नाम्नी सर्वतोभद्रा कान्ता बभूव। तस्या गर्भप्रदेशेऽसौ गृहीतमुनिदानधर्मशम्बलो गोपालबाल सङ्गमोऽवततार । इभ्यचूडामणिचुम्बितपदसरसीरुहयामलेन गोभद्रश्रेष्ठिनाऽपि तदाऽद्भुतानन्दितसकललोकमण्डलमहोत्सवश्चक्रे । जन्मसमये च तस्य शालिभद्रेति नाम व्यधायि । अथासौ शालिर्द्वितीयेन्दुरिव कलादिभिरेधमान क्रमेण सौभाग्यलावण्यानुपमलक्ष्मीलीलाललिततारुण्यमधिजगन्वान् । पिताऽपि तं तदनुरूपा द्वात्रिंशतमिभ्यकुलकन्याः परिणाययाम्बभूव । ताभिः सार्धं प्रतिदिनं विविधभोगानुपभुञ्जानोऽतुलप्रमदप्रकर्षजलाशयमीनोऽसौ शालिर्नैचोदयं नचास्तं भानवीयमवेयिवान् ।

अथ गोभद्रश्रेष्ठी गृहभारं शालिभद्रे निधाय भावितात्मा श्रीवीरसविधे परिव्रज्य च क्रमेण पञ्चत्वे प्राप्ते महर्द्धिसुरपदं प्रपेदे । ज्ञानेन च मर्त्यलोकस्थितं स्वनन्दनं शालिं संस्मृत्य पुत्ररागवशम्वदोऽनुत्तरदेवर्द्धि देवलोकात् सदा शालये प्रैषीत् । अहो कीदृश एष मुनिदानधर्मप्रभावो मर्त्यलोक एव च सतिष्ठमानोऽनुपमादिव्यभोगावलीमनवरत परिभुञ्जानः पुण्यशालिर्लक्ष्मीशालिर्धैर्यशालिरसौ शालिः कौस्कान्न चित्रीयते । अथैकदा कश्चिद् वणिग्वर्गो रत्नकम्बलान् विक्रीणानः श्रेणिकनृपसभं समाययौ । दर्श्यमानेन च श्रेणिकेन रत्नकम्बलान् तन्मूल्ये पृष्टे स आचचक्षे । महाराज ! लक्षस्वर्णा अपि मूल्यं प्रतिकम्बलं नार्हति । तदाकर्ण्य विस्मितमना विहसितमुखश्च नृप आचख्यौ । त्वदुक्तेन मूल्येन तु अतुलविक्रमाक्रान्तद्यावाभूमिकाना गजादीना सङ्ग्रहो भवति, तेन च सम्परायेऽनेकराजन्यजयश्रीरभ्युपैति किमनेनैतन्महामूल्येनापि क्रीतेन कम्बलगणेन ? । तच्छ्रुत्वा तत पराव्रत्तः प्रतिस्थलं प्रसृतधवलिमशालियशःशरीरशालिशालिसदनमुपेयिवान् । भद्राऽपि तत्सकाशात् तदि-

हगृहेण सर्वकम्बलान् जग्राह। प्रतिस्वर्णं विभागेन नार्पयत्। इतः पुनः श्रेणिकनृपमहिषी चेलणा देवी दासीद्वारा कम्बलसम्बन्धिसर्ववृत्तान्तमव-गम्य राज्ञे कम्बलार्थं व्यजिज्ञपत्। राजाऽपि तदुपरोधेन तं वणिग्वर्गं कम्बलान् शुल्कमूल्येन ययाचे। ततः कृताञ्जलिः सोऽपि बभाषे। महाराज! भवन्नगरपरमाभरणरूपा भद्रानाम्नी श्रेष्ठिनी सर्वान् कम्बलान् निन्याय। तच्छ्रुत्वाऽतिविस्मितात्माऽसौ नृपो भद्रां प्रति कम्बलार्थं कश्चित्पुरुषं प्रैषीत्। भद्रा तं व्याजहार। भद्र! सर्वे कम्बला अनुत्तरदेवर्द्धिं भुञ्जानस्य मत्पुत्रशालेः स्नुषाभ्यो दत्ताः, चिरन्तनाः पुनर्बहवः सन्ति यदि नृपस्येच्छा सादरं निवेद्यताम्। पुरुषद्वारेण नृपोऽपि तच्छ्रुत्वा चिन्तयामास। कोऽसौ शालिभद्र, कीदृशी च तन्माता भद्रा। नाद्यापि मत्पुरे वसन्तमित्थंभूतं शालिभद्रमज्ञासिषम्, अवश्यमसौ दृशा निरीक्ष्यः इति हृदये कृत्वा स्वयं भूपालस्तद्भवनमुपेयिवान्। भद्राऽपि नृपं सत्कृत्य सप्तमभूमिमध्यिशयानं शालिमुपेत्यावोचत्। वत्स! श्रेणिकः समागतोऽस्ति तं दृशा क्षणं सम्भावय। शालिरवादीत् मातस्तादृशं क्रयाणकं शुल्कमूल्येनोपाददीथाः कोऽत्र ममार्थः?। तच्छ्रुत्वाऽऽनन्दसन्दोहभरितहृदया भद्रा पुनरूचे। नेदं क्रयाणकमपि तु भूपीठे नः स्वामी। तच्छ्रुत्वा विषण्णचेता यथाकथञ्चिदधः समा-गात्। स्मरमहादुर्गशालं तं शालिं प्रसादामृतशीतलोचनाभ्यामालोक्य नृपतिर्महानन्दं प्राप्त्। सोत्सङ्गे च तं शालिं निधायाचिक्रीडत्। ततो भद्रो-चे। महाराज! नरश्वासैरपि अयं शालिर्दोष्यते। न चायं कनिष्ठसप्तमभूमितोऽधोऽवततारेति। भवदुपरोधहेतुक एवायं प्रस्तावोऽद्य संजातः। देवभूयं गतेन गोभद्रश्रेष्ठिना प्रेषितदेवर्द्धिसम्भारेण लोकोत्तरसुखमाप्नुवन्प्रासादोपरितनसप्तमभूमिप्रदेश एवाहमिन्द्र इव महानन्दमवतिष्ठमानः सदाऽऽस्ते। तस्मादयं शालिकुमारो मुच्यतां महाराजेन। मुक्ते च राज्ञा तत्क्षणं कारागृहाद्विनिर्गत इव स्वस्थानमाससाद। मय्यपि हन्त स्वामी वर्तते इत्यादि-महाखेदाधिगमपुरस्सरं क्रमेण वैराग्यं प्रतिपद्य सहसा परित्यक्तुमशक्नुवन् प्रतिदिनमेकैकां नारीं तत्याज। इतश्च शालिभद्रभगिनीसुभद्राद्वारेण इत्थंभूतं शालिभद्रवृत्तान्तं विज्ञाय धन्यनामा तत्पतिरवोचत्। शालिभद्रो भोगपरिहारे महाकातर एवान्यथा सर्वा एव स्त्रीः कथं युगपन्न जह्यात्, न खल्वमृतोपलम्भे विषपानपरिहारो विलम्बतः कर्तुं युक्तः, न च सात्त्विकधौरेयाणामिदं लक्षणमित्यादि। तच्छ्रुत्वा तदीयेतरास्त्रियः प्रोचुः। नाथ! "उपकारो भूयः सन्ति कर्तारः केऽपि साधवः"॥ तच्छ्रुत्वाऽऽत्मानमुपहसमानमबलाभिरवगम्य सदसद्विवेकालङ्कारालङ्कृतात्मा धन्यो धन्य-श्रेष्ठी तत्क्षणं सर्वाः स्वस्त्रीः परित्यज्य सशालिसुभद्रः श्रीवीरसविधे प्रवव्राज। अथ प्रशमितसकलकषायकालुष्यानलज्वालः सुखे दुःखे तत्कारणेषु च

समदृशं विभ्राणोऽत्युग्रं संयमसाम्राज्यं पालयामास शालिभद्रादिः । एकदा सर्ववधूराजिराजिता भद्रा श्रीवीरभगवतः स्वनन्दनादेश्च दर्शनं कर्तुं श्रीवीरसन्निधिमागात् । भगवन्त वन्दित्वा ध्यानाश्रितशालिभद्रादेः पुर' समेत्य शालिभद्र धन्यं सुभद्रा चाभिवीक्ष्याविर्भूतमहामोहजन्योपताप-परम्परा भद्रा सवधूटीका मुमूर्च्छे । श्रीश्रेणिको नृपस्ता चम्यद्वचनपीयूषतुषारैरुपशमयाञ्चक्रे । तदनन्तरं पारमार्थिकसम्यग्गुणेन शालिभद्रादिम-भिष्टुत्य, पुनः पुन प्रणम्य च स्वावासमियाय । अहो! प्रशमरसमूर्त्तिरहो! महामोहमातङ्गकेसरी असौ शालिः, अद्भुतं तदीयं धैर्य, वचनातीत तदीयं वीर्यम्, यद्भद्राऽऽदिकाययष्टिं विभ्राणेन विचित्ररूपेण महामोहव्याधेन विचित्रवचनरचनावाणद्वारा वेध्यता मनागपि नोपययिवान्। अथ च शालिर्धन्यश्च परिसोढप्रमाणातीतमोहनृपसेनाप्रहार परमाध्यात्मरसायनविशदीकृतात्मा ध्रुवध्यानं समारूढ. सर्वार्थसिद्धिं सर्वार्थसिद्धना-मविमानं प्रपेदे। ततश्च्युत्वा नृभवमासाद्य तस्मिन्नेव भवे महानन्दमहानन्दसरोराजराजहसपदवीं समासादयिष्यतीति ।

एतद्ग्रन्थमुद्रापणे प्रतिचतुष्कमस्माभिरुपलब्धम् । तत्र द्वे शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणाम्, तत्रैका मूलमात्रस्वरूपेतरा पुन' सावचूरीका । इयमेव चावचूरी मुद्रापणेऽस्माकमाधारभूता संजाता । तत्राद्या प्रति साधारणशुद्धा, सावचूरीका पुन शुद्धा। पं श्रीवीरविजयस्य–सक्षिप्तावचूरीका शुद्धप्राया । मुनि–श्रीमोहनविजयस्य तु मूलमात्रस्वरूपा नव्या प्रतिरशुद्धा ।

अस्य मुद्रापणे धनादिभिः सहायभूतो माण्डलनिवासी श्रेष्ठी छगनलाल–वखताचन्द इत्यभूत् । तथाहि—

श्रीअर्हत्सदनैः स्फुरद्ध्वजपटैः सौवर्णकुम्भालिभिर्भ्राजिष्णौ विबुधोत्तमैस्सुललिते श्रीनन्दनैर्भासिते।
उद्यानै. पविते च देवगुरुभी रम्भाभरैः पूरिते स्वर्देशे व सदा झगद्द्युतिततौ श्रीजिष्णुभूषाजुषि ॥ १ ॥
श्रीलीलालयराष्ट्रगुर्जरशिरोरत्नावतसे पुरे, श्रीमन्माण्डलनामके धनिगणैः सम्माननीयोऽभवत् ।
श्रेष्ठी सामजिसंज्ञकः शुचिमना मोहद्रुभङ्गाय यः सम्यग्दर्शनसामजं कलितवानिच्छन् स्वनामार्थवत् ॥२॥ [युग्मम्]

आसीत्तस्य च दारकोऽथ वखताचन्द्राभिधः श्रेष्ठिराट्, पीयूषोच्चयवर्षिवाक्किरणकः स्फूर्जत्कला भूयसीः ।
बिभ्रन्नित्यमहोदयो विरहिणां हर्षप्रदो निर्मलो योऽपूर्वो किल चन्द्रतामचकलत् स्वाख्यार्थवत्ताकृते ॥ ३ ॥

तस्याभूच्छगनादिलालतनयोऽर्हद्भक्तिरक्तात्मकः साधूनां वरिवस्यको गुणमणिश्रीरोहणोर्वीधरः ।
तस्यासीत्पुनरङ्गना प्रदधती श्रीशीलभूषां सदा श्रीशङ्खेश्वरपत्तनप्रतिवसत्कल्याणकश्रेष्ठिजा ॥ ४ ॥

श्रीदीपाल्यभिधाऽन्तरुग्रतिमिरप्रध्वंसिसज्ज्ञानितादीपालिं दधती व्यधत्त विदुषी या सान्वयां स्वाभिधाम् ।
तावौदार्यजुषौ गभीरहृदयौ विध्वंस्य सम्मोहितां, प्रैषिष्टां निजमेकमेव तनयं ज्ञानाय काश्यामहो ॥ ५ ॥

दम्पत्योर्मृतिमासयोरथ तयोः श्रीपुण्यलक्ष्मीजुषोस्तन्नामसंस्मरणाय शालिचरिताख्यो ग्रन्थ एषोऽमलः ।
श्रीमत्पोपटलालनामसुधियो बन्धोरिदंश्रेष्ठिनः साहाय्येन धनैः प्रकाशित इलापीठे सदा नन्दतात् ॥ ६ ॥

सप्रश्रयं निवेदयन्ति—

श्रीयशोविजयग्रन्थमालाव्यवस्थापकाः ।

# शोधनपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५ | ११ | -हारिकानां | -हारिकाणां |
| ७ | ६ | मात | मातः ! |
| ,, | ७ | अभद्राऽऽपि | अभद्राऽपि |
| ९ | ८ | -दुज्झिताश्रु जला- | -दुज्झिताश्रुजला- |
| ९ | ९ | प्रतिवेशन्य. | प्रातिवेशिन्य |
| १० | ८ | एषन्त्याः | एष्यन्त्याः |
| १४ | ८ | -स अपरमः | -सोऽपरमः |
| १५ | ३ | आथाचान्तः | अथाचान्तः |
| १६ | ३ | समुत्सकाः | समुत्सुकाः |
| १८ | १ | दुखितः | दुःखितः |
| ,, | ३ | बलोज्वलः | मलोज्ज्वलः |
| १९ | ५ | सह यायिनी | सहयायिनी |
| ,, | ८ | विधायनी | विधायिनी |
| २३ | ३ | मुक्तोज्वल- | मुक्तोज्ज्वल- |
| ३४ | २ | मायागोमावयः | मायागोमायवः |
| ५६ | ७ | चन्द्रिका चारु चीरस्य | चन्द्रिकाचारुचीरस्य |
| ,, | १० | -मुद्रजाः | -मुद्रुजाः |
| ६४ | ७ | यस्या गेहे च ति- | यस्य गेहेऽवति- |
| ,, | ८ | -मावतुः | -मावतः |
| ६५ | ५ | प्रणाज्योऽपि | प्रणाय्योऽपि |
| ,, | ,, | -पाज्यभू | -पाय्यभू |
| ६९ | १ | यथार्ऽयदेशात् | यथाऽऽर्यदेशात् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७१ | ७ | -गाङ्गरथानां | -गाङ्गरङ्गानां |
| ८१ | ६ | तिग्माणिभे | निग्माणिभ्ये |
| ९१ | ५ | कृतीकृत्यं | कृती कृत्यं |
| ९४ | ८ | गूर्विं | गूर्वीं |
| ९८ | ११ | गोनितुं | गोनमितुं |
| १०७ | ११ | रूपगागारः | रूपगागारु |
| ११४ | ९ | उग्भ्रीशै | उद्भीशे |
| ११७ | ११ | रुजनाश ग्रामश | रुजनश्च ग्रामस्य |
| १२२ | ९ | विपतारिका | विप्रतारिता |
| १२३ | ५ | -फन्गुका | -फल्गुकां |
| १३६ | ११ | -क्षीरोर्मिगताः | -क्षीरनिर्भेताः |
| १४४ | ११ | तृपरर्धितः | नृपैरर्धितः |



अर्हम्

पण्डितश्रीधर्मकुमारविरचितं

# श्रीशालिभद्रचरितम्

श्रीदानधर्मकल्पद्रुर्जीयात्सौभाग्यभाग्यभूः । पूर्वापश्चिमतीर्थेशलक्ष्मीभोगमहाफलः ॥ १ ॥

आदौ धनभवे येन घृतमेघायितं[1] तथा । जज्ञे यथोर्वीशस्य[2]श्रीः श्रीनाभेयः स वः श्रिये ॥ २ ॥

आद्यजन्ममहादानमूलो नोन्मूलितः किल । यस्य प्रबल*मिथ्यात्वदन्तिना बोधिपादपैः[3] ॥ ३ ॥

कोटिं प्राप्ते दयादाने देवदूष्यं ध्वजं[4] किल । निस्सङ्गोऽपि ददौ यश्च श्रीवीरः स शिवाय वः (युग्मम्)॥४॥

१ घृतमेघवदाचरितम् । २ उर्वीशस्य राज्ञः; पक्षे गुरुतरा धान्यश्रीः; अथवा शस्या प्रधाना श्रीः । ३ बोधिपादपं पिप्पलं आत्मीयं भोज्यं मत्वा गजो नोन्मूलयति; यतः श्रीवृक्षः कुञ्जराशन इति हैमः । ४ यः कोटीश्वरो भवति स निजगृहोपरि ध्वजं दत्ते ॥ * प्रमदेति पाठान्तरम् ।

बुधैर्विचारिता चारुविश्वत्रितयगोचरा । पुण्यप्रस्रवणोच्चारा गौर्देवी कामदाऽस्तु मे ॥ ५ ॥
यदीयकरसम्पर्काद्रसोल्लासोऽश्मनोऽपि मे । गुरवस्ते प्रसीदन्तु श्रीसोमप्रभसूरयः ॥ ६ ॥
श्रीदेवानन्दशिष्यश्रीकनकप्रभशिष्यराट् । श्रीप्रद्युम्नश्चिरं जीयाद् ग्रन्थस्यास्यापि शुद्धिकृत् ॥ ७ ॥
येभ्यः श्रीजैनधर्मस्य महोदयमयी प्रभा । पूज्या नन्दन्तु ते श्रीमदुदयप्रभसूरयः ॥ ८ ॥
दक्षिणावर्त्तशङ्खश्रीर्दानधर्मसुशब्दभूः । हेतुरक्षीणलक्ष्मीणां भवाम्भोधौ सुदुर्लभः ॥ ९ ॥
हेलया कलयामास करं यस्याच्युतश्रियः । श्रीशालिभद्रं श्रीशालिभद्रं तं कथया प्रथे (युग्मम्) ॥ १० ॥
तावदाबालगोपालमहेलं प्रथिता कथा । श्रीरामस्येव सौभाग्यं श्रीशालेः किञ्चिदुच्यते ॥ ११ ॥
धनधान्यैरगाधश्रीः संबाधः साधुगोधनैः । देशोऽस्ति मगधो नाम नैगधोरणिबन्धुरः ॥ १२ ॥

---

१ विचारिता व्याख्याता; पक्षे विशेषेण चारिता । प्रकर्षेण स्रवणं उच्चारणं; पक्षे मूत्रं गोमयं च; गौर्धेनुर्वाक् च । २ चन्द्रोपलश्चन्द्रकरैः स्पृष्टो जलं मुञ्चति इत्यभिप्रायः । ३ दक्षिणावर्त्तशंखोऽवादितोऽपि शब्दं करोति; पक्षे कीर्त्तिजनकः । ४ अभ्रष्टा श्रीः शोभा यस्य; पक्षे कृष्णवत् श्रीः यस्य । श्रिया शालीनि शोभमानानि भद्राणि मङ्गलानि यस्य । भद्रं मङ्गलं सुवर्णं च । प्रथे विस्तारयामि । ५ सङ्कुलः । ६ नगाः पर्वता वृक्षा वा तेषां धोरणिः श्रेणिः ॥

आसीदिह महाशालिपालिशालितसीमभूः । शालिग्राम इति ग्रामग्रामणी रामणीयकात् ॥ १३ ॥
दुग्धध्वनिधनालोकपयस्यामोदभोजनैः । बालोर्णाकम्बलस्पर्शैर्यत्र वैषयिकं सुखम् ॥ १४ ॥
पानीयच्छायालङ्कारी बहुधाऽन्योपकारकः । ऋजुनिष्पङ्कमार्गश्रीः स ग्रामः सज्जनायते ॥ १५ ॥
धनुर्वल्लिरिवोच्छिन्नवंशाऽपि गुणसङ्गता । प्रतिपच्चन्द्रलेखेव निष्कलङ्का कृशाऽपि या ॥ १६ ॥
कदलीवदसाराऽपि प्राञ्जला शीतला मृदुः । निराधाराऽपि हि सदाचारा तारावलीव या ॥ १७ ॥
सर्वत्राहितसौजन्या तत्र मान्या निजैर्गुणैः। अभूदभिधया धन्या नारी नारीणवैभवा (विशेषकम्)॥ १८ ॥
जङ्गमस्सेवधिस्तस्या मनोरथतुरङ्गमः । आस्ते सूनुरनूनाङ्गः सङ्गमः सौख्यसङ्गमः ॥ १९ ॥
स सोम इव सौम्यश्रीश्चतुरश्च चकोरवत् । अहिंसकः शुको यद्वत्कलगीः कलकण्ठवत् ॥ २० ॥

---

१ पालयः केदारास्तैः शोभितसीमभूः ।२ रमणीयस्य भावो रामणीयं तस्मात् प्रधानत्वात् । ३ पयस्यं घृतदध्यादि । ४ श्रोत्रनेत्रघ्राणरसनस्पर्शनक्रमेण पञ्चधा वैषयिकं सुखं; पक्षे देशजं च । ५ महत्त्वशोभयाऽलङ्कारो यस्य; पक्षे पानीयं छाया च । ६ बहुधान्यैरुपकारकः; पक्षे बहुधा अन्यस्योपकर्ता । ७ वंशो वेणुरन्वयश्च । ८ गुणः प्रत्यञ्चा, स्त्रीगुणश्च । ९ शोभन आचारो यस्याः; पक्षे सततभ्रमणशीला । १० न अरीणः अक्षीणः अपि तु क्षीण एव वैभवो यस्याः, निस्वेत्यर्थः । ११ चलन्निधिः । १२ मेलकः ॥

विनये वेतसः[1] साक्षाद्विवेकी कलहंसवत्। स्वभावादेव निर्माय: सारङ्ग[2] इव सङ्गमः (युग्मम्) ॥२१॥

लघुनाऽपि कुलीनेना[3]विपरीतेन[4] तेन सा। मुदिताऽभूद्विपत्रेणा[5]प्याशा[6] विश्रामशाखिना ॥२२॥

अनिन्दुरपि[7] दीपाली रजनीदीप्रदीपिका। विधवाऽपि तथा नारी राजते पुत्रदीपिका ॥२३॥

यथा दीपालिकाकल्पा[8] कीर्त्यते किल कार्त्तिकी। तथैवाविधवादेश्या[9] स्त्री पुत्राद्विधवाऽप्यहो ॥२४॥

उत्तमाः स्वगुणैः ख्याता मध्यमास्तु पितुर्गुणैः। इतीव सङ्गमस्येह नाम न ज्ञायते पितुः ॥२५॥

निजाङ्गजस्य पोषाय शोषाय प्राच्यकर्मणः। साऽन्यसद्मसु निर्छद्मा[10] चक्रे कर्माणि निर्मला ॥२६॥

सुतचूतस्य सेकाय दारिद्र्यानलशान्तये। चिन्तासन्तापनाशाय दुःखपङ्कापनीतये ॥२७॥

उग्रान्तरङ्गरोगार्त्ता जलयोगचिकीरिव[11]। दक्षा चिक्षेप साक्षेपमुदकुम्भा[12]नदाम्भिका (युग्मम्) ॥२८॥

---

१ वेत्रयष्टिरिव। २ हरिण इव। ३ पृथ्वीलीनेन; पक्षे कुलोत्पन्नेन। ४ न विभिः पक्षिभिः परीतेन; पक्षे अविपरीतेन विनीतेन। ५ विपद्रक्षकेण, पक्षे विगतपत्रेण। ६ आशा दिक्, मनोरथश्च। ७ इन्दुरहिता; पक्षे न निन्दुर्मृतापत्यप्रसविनी। ८-९ किंचिदूना दीपालिका अविधवा वा दीपालिकाकल्पा, अविधवादेश्या; इषदूने कल्पप्- देश्यप्- देशीयर् प्र० १० निर्माया। ११ जलयोगं चिकीर्षतीति जलयोगचिकीः। १२ उदकस्य कुम्भा घटास्तान्। "वैकव्यञ्जने पूर्ये"॥३।२।१०५॥ इति उदकस्योदादेशः॥

संमार्जनं चकाराऽऽर्या हर्म्याणां कर्मणामिव । घरट्टैर्दलयामास मरट्टैर्विपदामिव ॥ २९ ॥

अखण्डं खण्डयन्ती सा मुशलैः कुशला कणान् । दुरन्तदुरितानीव रेजे रञ्जितसज्जना ॥ ३० ॥

भोज्याच्छादनसन्देहे देहे[2] चिन्ताग्निना तथा । धनिगेहेषु सा देहे सेहे दुःखं यथा भृशम् ॥ ३१ ॥

अथाष्टवर्षः सोत्कर्षः सङ्गमः स्फुरदुद्यमः । गोचरे चारयामास वत्सरूपाणि वत्सलः ॥ ३२ ॥

जगन्मित्रावलोकेन स बुद्धः शुद्धबुद्धिमान् । त्यक्तस्वविषयग्रामो दण्डचीवरखण्डभृत् ॥ ३३ ॥

पवित्रगोप्रसूतानि वत्सरूपाण्यमत्सरः । पुरस्कृत्य कृती पुण्यकर्माणीव वनान्यगात् (युग्मम्) ॥ ३४ ॥

नारीणां वाग् यथा तथ्या कुमारीणां विशेषतः । गवां रेणुस्तथा पथ्या वत्सानां तस्य साऽधिकम् ॥ ३५ ॥

सुहितानीन्द्रियाणीव वत्सरूपाण्यतुच्छधीः । विचार्य संवरं नीला कम्बली कुक्षिशम्बली ॥ ३६ ॥

---

१ मरट्टैरहंकारैः प्रकर्षैर्वा । २ देहे दग्धा । ३ सोत्साहः । ४ सूर्योऽर्हंश्च । ५ बुद्धो जागरितो ज्ञाततत्त्वश्च । ६ स्वसमीपग्रामः, स्वं द्रव्यं देशसम्बन्धी ग्राम इति वा; पक्षे शब्दादीन्द्रियार्थाः । ७ गौः पशुर्वाणी च । ८ यतः प्रायः पानीयहारिकानां वाणी सत्यतया श्रूयते ; कुमार्य्युक्तमपि तथैवेति रूढिः । ९ सङ्गमकस्य । १० अतिशयगुणकराणि तृप्तानि वा । ११ प्रथमं स्वस्वविषयानिरोधात् परिभ्रम्य पश्चात् संवरं नीत्वा-उपशमं नीत्वा; पक्षे संवरं जलम् । १२ पाथेयम् ॥

मूलोत्तरगुणग्रामसङ्गतिर्मातृभक्तिभाग् । निशासु सुखशय्यायां स साधुरिव लीयते (युग्मम्) ॥ ३७ ॥
अन्यदाऽपश्यदुत्पश्यः पर्वणि क्वापि बालकः । कदन्नभोजनस्तत्र परमान्नं गृहे गृहे ॥ ३८ ॥
अतुच्छमुत्सवं मत्वा तत्त्वातत्त्वाविचारकः । स निजां जननीं सभ्यमभ्यधादिभ्यपुत्रवत् ॥ ३९ ॥
अम्बाविलम्बं सद्योऽद्य मह्यं नैरुज्याय सज्जय । पायसं कायसंप्रीत्यै सितायुक्तं घृतप्लुतम् ॥ ४० ॥
माता प्रोवाच हे वत्स ! रूपनारायणस्य ते । निजलीलाविलासस्य बालकस्य बलिः क्रिये ॥ ४१ ॥
न्युञ्छनं तव नेत्राणां भाषितस्यावतारणम् । भ्राम्येऽहं भुजयोर्जातमुखकस्य म्रिये म्रिये ॥ ४२ ॥
प्रमोदमेदुरस्वान्त सदासन्तुष्ट जात ते । बालकस्याप्यबालस्य न कदाऽपि कदाग्रहः ॥ ४३ ॥
श्रद्धां ते पूरयिष्यामि दूरयिष्याम्यमङ्गलम् । वदन्ति प्रति पुत्रं हि प्रत्यनीकं न मातरः ॥ ४४ ॥

---

१ मूलाच्छैशवादारभ्योत्कृष्टा गुणसन्दोहसङ्गतिः । मूलगुणाः महाव्रतानि, उत्तरगुणाः पिण्डविसोद्धीत्यादि; पक्षे ग्रामविशेषणम् । २ अष्टौ मातरः । ३ सुखशय्यायां; पक्षे तत्त्वानां श्रद्धानं, परलाभाप्रार्थनं, विषयसुखानाशंसा, अनीहा च । ४ उत् ऊर्ध्वं पश्यतीति उत्पश्यः उन्मुखः । ५ सभ्यं प्रधानं यथा स्यात् तथा । ६ नीरोगाय । ७ सुधामधुरिमभुज्योल्लासगृह्णीकाशर्करादिभिः । वेधसा सारमुद्धृत्य विहितं जननीमनः इति वचनात् जात हे पुत्र ! । ८ अबालस्य विदुषः ॥

साक्षादिव सुधासारैर्व्याहारैरतिरञ्जितः[1] । मात्रा मात्राधिकं बालस्तत्कालमगमद् गृहात् ॥ ४५ ॥
वन्या[2] वल्लीव धन्याऽथ स्वाङ्गजस्य गजस्य सा । दन्तैरुदन्तैर्वाञ्छाया धुता[3] विच्छायतामिता ॥४६ ॥
साऽचिन्तयदथ व्यर्थप्रत्याशाविधुराशया । मत्तोऽधिकां व्यधाद्वेधा वशां[4] कां दुर्दशावशाम्[5] ॥ ४७ ॥
निम्नं[6] स्त्रीजन्म तत्रापि वैधव्यं नव्यदुःखकृत् । दौस्थ्यं स्थानमनास्थाया दास्यं हास्यकरं जने ॥४८॥
स्मारं स्मारं पूर्वसौख्यं तारं तारं रुरोद सा । रीणानामिह[7] नारीणामुदितं रुदितं बलम् ॥ ४९ ॥
हा मात किमहं जाता हा पितः पालिताऽस्मि किम् । विपदां वर्णकग्रामः प्रकाममसुखास्पदम् ॥ ५० ॥
अभद्राऽऽपि यथा भद्रा धन्याऽहं नामतस्तथा । एकदाऽप्येकपुत्रस्य नालम्भूर्ष्णुः[8] सुभोजने ॥ ५१ ॥
श्रुत्वेति प्रतिवेशिन्य अवेशिन्य[9]स्तया शुचा । तर्जनेन[10] प्रदेशिन्यः सुखादेशिन्य[11] ऐयरुः ॥ ५२ ॥
राजन्य[12]स्येव राजन्यः प्रायोऽरिः प्रातिवेश्मिकः । क्षेत्रावनेरिवास्यास्तु स्रवन्त्य[13]स्ता रसैः[14] श्रिये ॥ ५३ ॥

---

१ व्याहारैर्वचनैः । २ वने भवा वन्या । ३ धुता कम्पिता । ४ वशां नारीं । ५ दारिद्र्यवशवर्तिनीं । ६ नरकेऽपि गतिर्नास्ति यस्य जीवस्य स स्फुटम् । सर्वदुःखविधौ स्त्रीत्वे नियोज्येत कुकर्मभिः । ७ रीणानां खिन्नानाम् । ८ नालम्भूष्णुः न समर्था । ९ तेन शोकेन अवेशिन्यो व्याकुलाः । १० तर्जनेन प्रदेशिनीसदृशाः । ११ सुखदात्र्यः । १२ क्षत्रियस्येव क्षत्रियः प्रातिवेश्मिको वैरीभवति । १३ स्रवन्त्यो नद्यः । १४ रसो जलानि ॥

स्वसः संवृणु निःश्वासान् मातर्माऽतः परं रुदः । कल्याणवल्लेः कल्याणि वारणं कारणं वद ॥ ५४ ॥

कुशलं कुशलं सूनोः शान्तं शान्तममङ्गलम् । इत्यूचुः सूचितस्नेहसर्वस्वारतां तदा हि ताः ॥ ५५ ॥

अथो विधूय नेत्राम्बु प्राञ्जला कम्बलाञ्चलैः। शुचिः सोवाच शोचामि मन्दभाग्या किमात्मनः॥ ५६ ॥

आजन्मदुःखदग्धां मां विदग्धा अपि मुग्धवत्। तापं किं पृच्छत स्वच्छा इष्टिकापाकमूषिकाम्॥५७॥

विशेषस्तु विशेषज्ञा मनोरथरथेऽद्य माम्। अवेदनः[1] सुतः सूतैः[2] संयुयोज जरद्गवीम्[3] ॥ ५८ ॥

तन्निर्वाहाक्षमा क्षामा[4] विषीदामि निषीदत[5] । हेतुर्नान्यः सौख्यकेतुर्[6]भवत्सन्निधिसन्निधेः[7] ॥ ५९ ॥

ततस्ता विस्मिता स्माहुरैन्द्रो गज इवाङ्गजः । कल्पद्रुम[8]फलश्रेणीं निस्सहे[9]! किं समीहते ॥ ६० ॥

गद्गदं सा जगादाथ सुस्निग्धं[10] वसुधासुधा। प्रतीतं[11] परमप्रीत्यै निसर्गात्[12] स्वर्गिणामपि ॥ ६१ ॥

पायसं सद्धच इव निर्धनैः क्वापि नाप्यते। तत्तेनायाचि यत् दृष्टश्रद्धालुर्बालको जनः (युग्मम्) ॥६२॥

---

१ ज्ञानरहितः । २ सारथिः । ३ जरतीं गाम् । ४ दुर्बला । ५ यूयामिति शेषः । ६ सौख्यस्य केतुग्रहः । ७ भवत्सामीप्यमेव सन्निधिः सेवधिस्तस्मात् । ८ तव पुत्रः किं कल्पद्रुमफलश्रेणीं वाञ्छति । ९ हे असमर्थे ! । १० सस्नेहम् । ११ व्याख्यातं । १२ स्वभावात् ॥

॥लि० ऊचुस्ताः सज्जनंमन्याः समदुःखसुखा वयम् । अनया चर्चया वर्ये ! स्नेहशून्या विभाविताः ॥६३॥
धन्ये धन्याऽसि, मानार्थे जीवं मुञ्चन्ति मानिनः । जीविताधिकपुत्रार्थे त्वं तु मानं न मुञ्चसि ॥६४॥
१ ॥ धूमरीभिरिवास्माभिः शाम्येद् दुःखानलो न चेत् । रवेरिवास्य बालस्य किं नान्तर्द्धीयते रुचिः ॥६५॥
काऽप्यवादीदिमं पुत्रं भोजयिष्ये स्ववेश्मनि । पराऽवोचद्युक्तमेवं प्रत्येकं क्रमशः पुनः ॥ ६६ ॥
माता प्रमोदते नैवमन्याऽऽचष्ट विशिष्टधीः । परा बभाषे संभूय सर्वाः कुर्मो वयं त्वदः ॥ ६७ ॥
इत्युक्त्वैका गुणप्रायान् प्रैषीत्कलमतन्दुलान् । पयोभिः पूरितां पौरीं स्वयशोभिरिवेतरा ॥ ६८ ॥
आज्यं प्राज्यं रसश्रीणां साम्राज्यमिव चापरा । कलां सितोपलां चान्या प्रीतिस्फीतिमिवोज्ज्वलाम् (युग्मम्)
दत्ते स्नेहं वैरारक्षस्त्यक्तनीराऽनुमानतः । सा सखीभ्यस्तु तं प्रापदुज्झिताश्रु जलाधिकम् ॥ ७० ॥
शतैः सुपीटकः प्राप्यः सहस्रैः प्रातिवेश्मिकः । तस्यास्तु प्रतिवेशान्यः प्राप्ताः कोटिं परां पुनः ॥७१॥

---

१ वार्तया । २ अन्तर्द्धीयते आच्छाद्यते । ३ रुचिरभिलाषः, कान्तिश्च । ४ मिलित्वा । ५ पारी स्यात् पानभाजनम् । ६ प्रस्तावतो घृतम् । ७ बहुतरम् । ८ सूक्ष्मां सुमृष्टाम् । ९ सर्कराम् । १० प्रधानतो रक्षणं यस्य तं स्नेहं (प्रधानरक्षणीयम् ) । ११ ग्रामैकदेशः ।

दुष्प्रापाः प्रतिवेशिन्यो दुःखादर्शनिभा अपि । तास्तस्या दुःखशल्यीयस्कान्तरत्नोपमाः पुनः ॥ ७२ ॥
धन्यंमन्या ततो धन्या परमान्नस्य सङ्गमम्[2] । विधाय सङ्गमस्यार्थेऽजनि प्रमदमेदुरा ॥ ७३ ॥
विसृज्य वत्सरूपाणि स्नातः शान्तपरिश्रमः । आजगाम निजं धाम सङ्गमः शुभसङ्गमः ॥ ७४ ॥
आस्तासनि स निःशल्ये निश्चले मातृकल्पिते । समाश्रित्योत्तरां काष्ठां[3] जैनधर्म इवामले ॥ ७५ ॥
माता ज्ञानवतीवास्य शिशोरग्रे चतुष्किकाम् । गृहिधर्मतरोर्दानफलादानकृते न्यधात् ॥ ७६ ॥
तत्र कुण्डलिकां साऽथ भव्येव भवितव्यता । स्थापयन्त्यस्य दुष्कर्म किल कुण्डलितं व्यधात् ॥ ७७ ॥
सतां चित्तमिवोदारं सुविमृष्टं[4] च वाक्यवत् । गात्रवच्च रुचेः पात्रं स्थालं न्योरथच्च[5] तत्र सा ॥ ७८ ॥
एषन्त्याः[6] सहसा धर्मवाहिन्या[7] दानसम्पदः[8] । नासीरमिव[9] तन्नीरं करं[10]शुद्धिकरं बभौ ॥ ७९ ॥
सुभटस्वान्तवत् सोष्म सुखदं न्याय्यवित्तवत् । मातृचित्तमिव स्निग्धं सरसं सच्चारित्रवत् ॥ ८० ॥

---

१ चुम्बकः । २ संयोगम् । ३ काष्ठां दिशं; पक्षे निष्ठाम् । ४ सुप्रमार्जितम्; पक्षे विचारितम् । ५ स्थापितवती कुण्डलिकायाम् । ६ आगच्छन्त्याः । ७ पुण्यनद्याः; सेना । ८ दानस्य वितरणस्य; पक्षे गजमदस्य । ९ अग्रयानम्; पक्षे सेनाया अग्रेसरम् । १० करो हस्तः; पक्षे दण्डः ॥

॥ लि०

११ ॥

सर्वथैव मनोहारि गुरुशिक्षावचो यथा। माता प्रमुदिता तस्मै पायसं पर्यवेषयत् (युग्मम्) ॥ ८१ ॥
सिताघृताभ्यां तन्नीत्युत्साहाभ्यामिव वैभवम्। स्फारीकृत्यान्यतः साऽगात् किल संतोषदृग्भयात्॥८२॥
इतश्च कश्चिदागच्छच्चिन्तामणिरचिन्तितः। अकल्पितश्च कल्पद्रुः कामधेनुरकामिता ॥ ८३ ॥
योगाभ्यासरतिः सर्वविरतिः प्रोल्लसन्मतिः। मासोपवासनिरतिर्मुक्तिमार्गगतिर्यतिः (युग्मम्) ॥ ८४ ॥
यथा हि दक्षिणावर्त्तशङ्खः कृष्णश्च चित्रकः। पुण्यैरगण्यैः प्रत्यक्षस्तथा तस्याभवन्मुनिः ॥ ८५ ॥
तस्माज्जगत्त्रयीमित्रादसावादर्शनिर्मलः। तेजोबोधमयं प्रापदन्तरङ्गतमोपहम् ॥ ८६ ॥
जातजातिस्मृतिरिव प्राप्तजन्माऽथ निर्जरः। किमेतदिति संभ्रान्तस्ततश्चेतस्यचिन्तयत् ॥ ८७ ॥
अहो भाग्यमहो भाग्यमहो मेऽद्य महोत्सवः। अरिरे धर्मसामग्री कदरे कर्म्मलाघवम् ॥ ८८ ॥
अनभ्रविभ्रमा वृष्टिरचन्द्रा किल चान्द्रिका। अप्रदीपः प्रकाशश्च ममाकस्मात् विजृम्भते ॥ ८९ ॥
ऐरावणोऽयं भूपीठे गङ्गापूरश्च जाङ्गले। मरौ जातः पारिजातः साधुर्ग्रामे यदीदृशे ॥ ९० ॥

---

१ दृष्टिलगनभयात्। २ सूर्यान्मुनेश्च। यदाहि मुकुर आतपे धृयतेऽश्ममध्ये प्रकाशो भवति। ३ अयं सङ्गमः।

राजा रोरगृहं प्रापदमावास्यामयं शशी । हेलिः पातालमूलं वा यत्तत्रापि ममालयम् ॥ ९१ ॥
सामान्यान्नस्य सन्देहे परमान्नं क्व मे गृहे। ऊषरे स्यान्न तृण्यौऽपि क्व महाशालिपालयः ॥ ९२ ॥
त्रिवेणीसङ्गमः सोऽयं जज्ञे गगनमण्डले । शिलापुत्रस्य[1] सन्तुष्टा गौरीब्राह्मीमहाश्रियः ॥ ९३ ॥
कुम्भे[2]ऽनवद्यत्रैविध्य[3]वादस्तदयमीक्षितः । याञ्चत्तावित्तपात्राणां सङ्गमः सङ्गमे मयि ॥ ९४ ॥
सद्यः समागतं वित्तं सद्यः पात्रं च सङ्गतम्। सद्यः प्रमुदितं चित्तं पुण्यं सद्योऽर्जयामि तत् ॥ ९५ ॥
सर्वरत्नप्रधानं श्रीरा[4]मेणान्नममन्यत । परमान्नं तु पा[5]त्रत्राकृतं चिन्तामणीयताम् ॥ ९६ ॥
एष एवामृताहारो यः सत्पात्रे नियोज्यते । रसो न हीयते यस्[6]य कल्पकोटिशतैरपि ॥ ९७ ॥
अभ्युत्तस्थौ विमृश्येति स्थालमादाय सुस्थिरः । उदञ्चदुच्चरोमाञ्चकञ्चुकः स व्यराजत ॥ ९८ ॥

---

१ निर्भाग्यो दुर्भगः पङ्गुः कुणिः कुण्ठमतिस्तथा। नीचः पापरतो यस्तु शिलापुत्रः स उच्यते। केचिदेवमाहुः। कस्याश्चित् स्त्रियो लोढको जातस्तया ऽसौऽरण्ये त्यक्तः; पुनर्गौरीसहितेन रुद्रेण दृष्टस्ततो गौर्य्या सहानीतस्ततो विद्यालक्ष्मीभ्यां दानेन तिस्रोऽपि तुष्टाः । २ कुम्भेऽचेतनघटे । ३ तर्कलक्षणसाहित्यरूपं त्रैविद्यम्। ४ उत्पत्तिर्दुर्लभा यस्य व्ययो यस्य दिने दिने । सर्वरत्नप्रधानस्य धान्यस्य कुशलं गृहे; इति श्रीरामश्लोकोऽयम्। ५ पात्राय दीयते इति पात्रत्रा; "देये त्रा च"॥७।२।१२३॥ ६ दानस्य॥

उद्भूतसुकृताङ्कूरः कृत[1]धर्मद्रुमावृतिः। दारिद्र्यद्वेषियुद्धाय सन्नद्ध इव शुद्धधीः (युग्मम्) ॥९९॥

स तं विज्ञापयामास कला[2]वानसि हे मुने!। यत्तुल्या राज्ञि रङ्केऽपि रुचिः स्फुरति ते शुचिः ॥१००॥

अचिन्तितोपलम्भेन स्पर्शेन[3] पदयोस्तव। त्वद्गुणे रक्त[4]धातोर्मे कल्या[5] कल्याण[6]ताऽजनि ॥१०१॥

मैत्रीविलासप्रासाद प्रसादं तत्प्रभो कुरु। करुणातरुणीपुण्यतरतारुण्य तारय ॥१०२॥

इमं दोषाकरं बालं दुर्बलं विगलद्वसुम्। निजसंभावनेनात्र पवित्रय महाव्रतिन् ॥१०३॥

पूर्वरङ्गं विधायेति सुधाऽऽसारकिरा गिरा। आनन्दाश्रुजलोद्गारैश्छटाच्छोटं किरन्निव ॥१०४॥

निषिञ्चन्निव भावद्रुं पङ्कं प्रक्षालयन्निव। जलपूर्वतया पूर्णं दानं दातुमिवोद्यतः ॥१०५॥

सप्रसादं सप्रमोदं सादरं भावभास्वरम्। भक्तिदक्षं गताकाङ्क्षमस्तकक्ष[7]मशिक्षितम् ॥१०६॥

---

१ कृता धर्मद्रुमे आ सामस्त्येन वृतिर्येन सः। २ कला विद्यते यस्य स धर्मकलासम्पन्न इत्यर्थः; यदुक्तम्। "बावत्तरिकलकुसला" ॥ ३ स्पर्शेन स्पर्शनेन; पक्षे स्पर्शः पाषाणविशेषः। ४ रक्ता रञ्जिता। ५ श्रेयसा कल्या प्रधाना। ६ पक्षे कल्याणं स्वर्णम्। ७ "पूर्वं न मन्त्रो न तदा विचारः कक्षा न केनापि फलेन वाञ्छा। पश्चात्र घोषोऽनुशयो न गर्वो हर्षोऽष्टमः संगमके बभूव"।

तस्मै[1] परमपात्रायापरमो[2]ऽपि स्वकर्मतः। युतः परमया भक्त्या परमान्नमदात्तदा (चतुर्भिः कलापकम्) ॥
रसः शान्तो मुनेर्ध्यानात्करुणश्चात्मनिन्दया। दानप्रवृत्तितो वीरश्चासम्भावनयाऽद्भुतः ॥१०८॥
वचस्विनां वचोऽतीतमगम्यं योगिनामपि। अमेयं मतिमानानां चतुःसङ्क्रमाप[3] सः[4] (युग्मम्) ॥१०९॥
प्रगृहीताभिधां[5] भिक्षां दक्षः षष्ठीं विचार्य सः। प्रगृहीतां मुनिश्चक्रे तदनुग्रहसाग्रहः ॥११०॥
तत्पुण्यराशिपल्यस्य[6] धर्मलाभाशिषा शिखाम्। मुनिर्निर्माय निर्मायचित्तः स्वाश्रयमाश्रयत् ॥१११॥
माता गृहान्तरायाता तस्मै सुस्मेरमानसा। निषण्णाया[7]विषण्णात्मा पायसं पुनरप्यदात् ॥११२॥
भोजयेन्मधुरं स्निग्धमम्बा बालं बलादपि। भुक्तोऽयं स्वयमेवेति हृष्टा नाचष्ट किञ्चन ॥११३॥

---

१ मुनीश्वराय। २ अपगता रमा यस्मात् स अपरमः। ३ संयोगम्। ४ सङ्गमः। ५ भिक्षा सप्तविधा भवति। तद्यथा। "संसट्ठ-मसंसट्ठा उद्धड तह अप्पलेविया चेव। उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिआ" ॥१॥ संसृष्टाभ्यां तत्-खरण्टिताभ्यां हस्तपात्राभ्यां भिक्षा संसृष्टा १। असंसृष्टाभ्यां तु ताभ्यामसंसृष्टा २। स्थाल्यादिभ्यः स्वार्थं भोजनाय उत्क्षिप्ता उद्धृता ३। निर्लेपं पृथुकादि तत्स्वरूपाऽल्पलेपा ४। भोजनकाले शरावाद्याहितभोज्यवस्तुमध्यादुत्पाटिता ५। भोजनार्थं करोपात्तभोज्यमध्याद् दातुमिष्टा प्रगृहीता ६। अन्यानभिलष्यमाणा परित्यज्यमानभक्ताद्यन्नरूपा उज्झितधर्मा ७॥ इति। ६ पल्यो धान्यमानविशेषः। ७ उपविष्टाय।

अहो काऽप्यस्य बालस्य लोभसंक्षोभसङ्गतिः। मुनिदानफले येन पश्य माताऽपि वञ्चिता ॥११४॥

आतूर्णं पुण्यपूर्णस्य प्रमोदभरशालिनः। अमृताहारतस्तस्मात् तस्यासीदाशितंभवः[2] ॥११५॥

आथाचान्तः[3] स विश्रान्तः प्रशान्ताभ्रान्तमानसः। अर्जितोर्जितराज्यश्रीरिवानन्दमविन्दत ॥११६॥

प्रसाधितस्य तत्पुण्यपाकस्य प्रगुणैर्गुणैः[4] । अप्रमेयमपि[5] प्राज्ञाः सम्भावयत सौरभम् ॥११७॥

तथाहि ।

मङ्गल्यं[6] दक्षिणावर्त्तं[7] तीक्ष्णघाति[8] रसायनम्[9]। गुर्व[10]दाहं[11] पवित्रं[12] च नम्रं[13] दानं सुवर्णति[14] ॥११८॥

दाक्षिण्याद्धातुवादोत्थमुपदेशात्[15]तु धातुजम्। दानं स्वारसिकं[16] हेम कुमारं गीयतेऽधिकम् ॥११९॥

---

१ वृद्धिः। २ तृप्तिः। ३ गृहीतचुलुकः सन् आनन्दमनुबभूव। ४ औदानिकैर्गुणैः। ५ अनन्तमपि। ६ मङ्गल्यमशिवोपशमात्। ७ जीवानुकूल्यात् दक्षिणावर्त्तम्। ८ मोहघातित्वात् तीक्ष्णघाति। ९ निर्वृतिकरणात् रसायनम्। १० त्रिकोटिशुद्धं गुरुः। ११ अदाह्यं कुविकल्पादिनाऽग्निना। १२ निजफलदानात् पवित्रम्। १३ गुरुलघुकाचिन्तायां नम्रम्। १४ एवमष्टगुणोपेतं सुवर्णायते। तदपि मङ्गल्यादिगुणोपेतम्। दाक्षिणः प्रदाक्षिणा वर्त्त आवर्तो यस्य। तीक्ष्णं लोहं तत्स्वर्णेन म्रियते। रसेन पारदेन अयनं यस्य॥ १५ रससिद्धिः कला विद्या धर्मस्तत्त्वं धनार्जना। गुरूपदेशेन विना प्राज्ञस्यापि न सिद्ध्यति। १६ स्वरसेन निर्वृत्तं स्वारसिकम्।

महामहार्घ्यं दुर्लभ्भं स्वयंभूर्भूतदोषहृत् । शालिग्रामभवं दानमेतत्स्वर्णं कुमारकम् ॥१२०॥

कुमारकनकाकारं दानमत्राजनिष्ट यत् । इतीव संनिवेशोऽयं शालिग्राम इतीरितः ॥१२१॥

वत्सकान्यनु गच्छान्ति येन गावः समुत्सकाः । शिश्रिये वत्सपालं तद्दूरात् तं धर्मकामधुक् ॥१२२॥

मिथ्यात्वपुद्गलानेव मन्ये मदनकोद्रवान् । रुरोद विमलीकर्त्तुमिव धन्याऽऽत्मजन्मनः ॥१२३॥

शतैः सुपाटकः प्राप्यः सहस्रैः प्रातिवेश्मिकः । तस्यास्तु प्रतिवेशिन्यः प्राप्ताः कोटिं परां पुनः ॥१२४॥

अषडक्षीणमन्त्रोऽयं पूर्वं स्वस्मै प्रकाश्य यः । पायसोपक्रमं चक्रे परलोकफलप्रदम् ॥१२५॥

कन्यासूत्रं गजपटी स्वयंभूर्देवता तथा । बालेन्दुरुपमानानि स्युस्तद्दानस्य शैशवे ॥१२६॥

श्रीनाभेयप्रपौत्रः श्रीश्रेयांसो जातिसंस्मरः । कलाकल्पलतामूलं मूलदेवश्च भूपभूः ॥१२७॥

नागरी गुणगौराङ्गी चन्दना नृपनन्दना । ग्राम्योऽयं बालगोपालः प्रदाते॰त्यद्भुतं पुनः ॥१२८॥

---

१ शालिग्रामे हि ईश्वरलिङ्गे भवति, तत्कुमारकम् इति । २ ईरितः कथितः । ३ चतुष्कर्णाः । ४ धर्मकामगवी । ५ यो मन्त्रः । ६ कुमारीकर्तितं सूत्रम् । ७ देशान्तरीयं वस्त्रं = गजवाडिः । ८ भूपभूः = राजपुत्रः ॥ ॐ प्रदाने इति पाठान्तरम् ।

च्चन्दनायाः किमाश्चर्यं स्वशिष्यायाः स्वयं प्रभुः[1]। सामग्र्याः कारको जज्ञे चतुर्द्धाऽभिग्रहाग्रही ॥१२९॥
मूलदेवेन तत्कालं स्वेच्छा स्वच्छतयोदिता[2] । बालेनापि महेच्छेनानेन मौनं कृतं हितम् ॥१३०॥
अनुदानं[3] पुरो[4] मातुर्मौनं यत्सङ्गमो व्यधात्* । मन्ये सत्यं तदेवाभून्मौनं सर्वार्थसाधकम् ॥१३१॥
तदार्जवं वासना[5] सा दुष्प्रापाऽस्तु कलौ नृणाम् । दाने दत्ते तु यत्तस्य मौनं तदपि दुष्करम् ॥१३२॥
महादानेऽपि यत्तस्य न सुरा ववृषुर्वसु[6] । दातुं किल व्यलम्बन्त तत्प्रभूतं भवान्तरे ॥१३३॥
न स्थानं धर्मसंस्थानं नचास्य विमलं कुलम् । नोपदेशः पुण्यदेशः[7] सन्निधिर्न धियां निधिः ॥१३४॥
इतीवानवधानेन[8] संमोहेनावधीरितः[9] । स कर्मविवरं प्राप्य मन्ये स्वार्थमसाधयत् (युग्मम्) ॥१३५॥
दाताऽऽहारस्य तं भुक्तं तृणायासौ न मन्यते । तेनापरिणतस्तस्य विचक्रेऽतिक्रुधेव सः[10] ॥१३६॥
कुञ्चिका पुण्यकोशस्य तस्य गूढा† विशूचिका । सूचिका गुणयोगेऽभून्न तु दोषस्य सूचिका[11] ॥१३७॥

---

१ श्रीवीरः । २ उदिता कथिता । ३ पश्चात् । ४ अग्रतः । ५ भावना । ६ वसु स्वर्ण रत्नं च । ७ पुण्यदः । ८ असावधानेन । ९ अवगणित. । १० विकारं गत इत्यर्थः । ११ कथयित्री ॥ * ऽधित इति प्रचुरः पाठः । † मूढा इति पाठान्तरम् ।

प्रायः स्मरत्यभावेऽपि हा मातरिति दुखितः । सो प्रत्युत मुनिध्यानात् तस्यासन्नाऽपि विस्मृता ॥१३८॥
प्रायः कण्टकभङ्गोऽपि स्याद्धर्मे रङ्गभङ्गदः । सङ्गमस्य पुनः प्राणसंशयोऽपि न भावभित् ॥१३९॥
स दध्यौ धीरधौरेयः पात्रदानबलोज्ज्वलः । मृतेरवश्यंभाविन्या भावज्ञानां कुतो भयम् ॥१४०॥
पान्थः पथि स दुःखी यो याति शंम्बलदुर्बलः । पात्रदानेन संपन्नं शम्बलं सबलं तु मे ॥१४१॥
कम्बलावरणस्यापि सत्यं मे भाग्यतोऽभवत् । पात्रदानमहापुण्यं कर्पूरेणाऽऽस्यंपूरणम् ॥१४२॥
पैंशुदेश्यः पशुंप्रेष्यः क्काहं सर्ववहिष्कृतः । क्क वा मुनिमहेन्द्रोऽयं सुमँनोराजिशेखरः ॥१४३॥
समग्रा सा क्क सामग्री क्क मे सर्वविहीनता⊛ । विशाला चन्द्रशालाऽसौ पर्णशालामधिश्रिता ॥१४४॥
पराँन्नं मां तु संस्थाप्य परमान्नं दधेऽम्बया । मया तु परमार्थान्नं कृत्वाऽर्थान्निजकानहो ॥१४५॥

१ मातुरभावेऽपि । २ सा माता । ३ शम्बलरहितः । ४ मुखपूरणम् । ५ पशुसमानः । ६ पशुसेवकः । ७ सुमनसो देवाः; पक्षे सुमनसां पुष्पाणां आवल्या कृतमुकुटः; सुमनसो विद्वांसश्च । ८ चन्द्रशाला शिरोगृहम् । इयं पूर्वोक्ता सामग्री कुटीरकोपरि चतुःशाला जाता । ९ परान्नः परपिण्डादः । ⊛ सर्वनिहीनता इति पाठान्तरम् ।

साम्प्रतं साम्प्रतं मेऽसौ प्रशमामृततालिका । शरणं शरणं शान्तेर्भूयान्मुनिमतालिका ॥१४६॥
सतां निदर्शनीयेऽस्मिन् रत्नादर्शसुदर्शने । पुरस्कृतो महात्मेव लघुके प्रतिबिम्बितः ॥१४७॥
नामुञ्चद्धर्मरङ्गस्तं तदात्वमपि सङ्गतः । प्राणान्तसङ्कटेऽप्यासे राजपुत्र इवोत्तमः ॥१४८॥
आचारः कुलमाख्याति यदि सत्यमिदं वचः । निर्णीतं दानधैर्याभ्यां तस्य क्षत्रियगोत्रभूः॥१४९॥
सौभाग्यं सङ्गमस्याहो नवोढाऽपि सुवासना । प्रिया सतीव सोल्लासा तस्याभूत्सह यायिनी ॥१५०॥
रूपस्थध्यानतो ध्यात्वा पञ्चमं परमेष्ठिनम् । समाधानसुधाकुण्डे कण्ठदघ्ने स मग्नधीः ॥१५१॥
निरीकृत्य गतिं दिव्यां दानशीलविनाकृताम् । दानध्यानानुसन्धानाद्दानशीलां गतिं ययौ (युग्मम्)॥
मर्त्यत्वे देवभोगानां लब्धिश्चित्रविधायनी । इतीव सुमनुष्यत्वसङ्गमं सङ्गमो व्यधात् ॥१५३॥
दत्त्वा भुक्त्वा च तत्तादृक् कथं भोक्ष्ये कदन्नकम् । इति ध्यात्वेव तत्याज निर्व्याजः स स्वजीवितम् ॥

१ युक्तम् । २ तटाकिका । ३ प्रधानः । ४ उदाहरणभूते । ५ पक्षे धनुषो रङ्गो भावः । ६ तदाऽस्माभिर्निश्चयः कृतः । ७ पक्षे वधूटी । ८ मुनि परमेष्ठिनम् । ९ प्रमाणेऽर्थे दघ्नद्-द्वयसद् , कण्ठप्रमाणे । १० अतिक्रम्य ।

अर्थे ग्रन्थिस्थिते को नु कुवासे निवसेद् बुधः। पात्रदानघनः सैष ग्रामाङ्गे[1]ते ततोऽत्यजत् ॥१५५॥
दानमुद्रां करे कृत्वा दधद्धर्माधिकारिताम् । सतां सेव्यः कथं त्वेष स्यात्तिरश्चामनुप्लवैः[2] ॥१५६॥
पात्रदानाभिमानाद्यो नृपस्यापि सहिष्यते। न स्वामित्वं कथं नाम स्वामीयतु पशूनयम् ॥१५७॥
प्रासाद इव चन्द्रस्यै[3] द्रौपदीचूतपादपैः[4] । चर्मरत्ने[5] शालिश्च मूलदोषहरैः[6] पटः ॥१५८॥
सुकृतं सङ्गमस्याहो प्राज्यभावप्रभावतः । तत्रैव दिवसे जज्ञे सर्वसिद्धिसमृद्धिदम् (युग्मम्) ॥१५९॥

रागद्वेषविवर्जितार्जवगुणप्राप्यं सदाऽप्यक्षयं
विश्वस्याप्युपरि स्थितं न पुनरावृत्याऽन्वितं निश्चितम् ।
एकस्यैव हि चेतनस्य रुचितं नान्यस्य भोगोचितं
दानं सङ्गमवत्सपालकलितं सिद्धेः सुखं च स्तुमः ॥१६०॥

---

१ ते ग्रामशरीरे । २ अनुप्लवः सेवकः । ३ चन्द्रस्य प्रासाद एकेनैव दिनेन कृतः शुभाय भवति न बहुदिनैः; तेन चन्द्रप्रासादः क्वापि न दृश्यते । ४ तथा द्रौपद्या शीलप्रभावेन तद्दादिनजातचूतफलैर्नारदः प्रीणितः । ५ चतुर्दशसु रत्नेषु चर्मरत्नं चक्रवर्तिराज्ञः सद्यः सकलस्कन्धावारविस्तारकृद्भवति । ६ पटस्तद्दिनकृत एव मूलनक्षत्रदोषहर्ता ।

श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नधिया शुद्धे प्रथमः प्रक्रमोऽभवत् ॥ १६१ ॥

## ॥ इति शालिभद्रकथायां प्रथमः प्रक्रमः समाप्तः ॥

तेन दानावदानेन[1] प्रीणितो धर्मभूपतिः । यं प्रसादमदत्तास्मै तस्य लीलायितुं स्तुमः ॥ १ ॥
अस्ति स्वास्तिपदं शश्वन्महापुरुष[2]सन्निभः । जम्बूद्वीप इति द्वीपश्चन्द्रनिस्तन्द्रवृत्त[3]भूः ॥ २ ॥
यस्यासौ लक्ष्यते लक्षयोजनायाममानिनः । सौवर्णो नित्यसज्योतिरचलो लक्षदीपकः[4] ॥ ३ ॥
सप्तसप्तिरथे[5] सप्तीन् सुरसप्तौ[6] मुखानि च । ग्रहान् लग्ने स्वरान्[7] गीतेऽङ्गानि राज्ये[8] गजे[9] तथा ॥ ४ ॥

---

१ अवदानमत्यद्भुतं कर्म । २ उदारस्तत्त्ववित् सत्वसंपन्नः सुकृताशयः । सर्वसत्त्वहितः सत्यशाली विशदसद्गुणः । विश्वोपकारी सम्पूर्णचन्द्रनिस्तन्द्रवृत्तभूः । विनीतात्मा विवेकी यः स महापुरुषः स्मृतः । ३ परिपूर्णः; पक्षे आचारः । ४ लक्षयोजनानि यावद्दीपकः । ५ सूर्यरथे तुरङ्गमान् । ६ उच्चैःश्रवसि । ७ षड्जऋषभगान्धारमध्यमः पञ्चमस्तथा । धैवतो-निषधः सप्त तन्त्रीकण्ठोत्थिताः स्वराः । ८ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि । ९ चत्वारः पादाः, करो मेढ्रं पुच्छं चेति गजाङ्गानि ।

धातूनङ्गे तथा सप्त क्षेत्राण्यत्र जगुर्जिनाः । स षड्वर्षधरश्चित्रं सप्तवर्षैः प्रकीर्त्यते (युग्मम्) ॥५॥
क्षेत्रदेशास्तु चत्वारस्तस्यं तिष्ठन्त्यकर्मठाः । पुत्रा इव त्रयः किन्तु सर्वेद्धिव्यवसायिनः ॥ ६ ॥
पारेऽब्धि परमं क्षेत्रं तत्तेषु भरताभिधम् । ऋतवो वत्सरे यद्वद्रागा गीते मुखा गुहे ॥ ७ ॥
रसा भोज्ये गुणा राज्ये तर्के वादविदाम्वरे । षडेव यत्र खण्डानि तथा रेजुरखण्डिते (युग्मम्) ॥८॥
वैताढ्येनोच्चगोत्रेण नीचधात्रीभवानि वा । त्रीणि त्रीणि पृथक् पङ्क्तौ विन्यवेश्यन्त तान्यहो ॥९॥

---

१ रसासृग्मांसमेदोऽस्थिमज्जःशुक्राणि धातवः । २ भरतादीनि सप्त जम्बूद्वीपे कथितानि । भरत १ हैमवत २ हरिवर्ष ३ विदेह ४ रम्यक ५ ऐरण्यवत ६ ऐरवत ७ क्षेत्राणि सप्त ज्ञेयानि । ३ हिमवन्त-महाहिमवन्त-निषध-नीलवन्त-रूपि-शिखरिणः; एते षट् पर्वता जम्बूद्वीपे षट् वर्षधरा उच्यन्ते । ४ अत्र वर्षशब्दः क्षेत्रवाची । ५ सप्तसु हैमवत-हरिवर्ष-रम्यक-ऐरण्यवताः चत्वारः । ६ जम्बूद्वीपस्य । ७ कर्मणि तत्पराः कर्मठाः; ठप्रत्ययः; न तथा अकर्मठाः । ८ भरत-विदेह-ऐरवताख्यास्त्रयः । ९ अब्धेः पारं पारेऽब्धि; अव्ययीभावः । १० वसन्त-ग्रीष्म-वर्षा-शरत्-शिशिर-हेमन्ताख्याः । ११ श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा । मेघरागश्च विज्ञेयः षष्ठो भट्टनरायणः । १२ कार्तिकेये शिवपुत्रे । १३ मधुराम्ललवणकटुकषायतिक्तभेदात् षट् । १४ सन्धिविग्रहयानासनद्वैधाश्रयरूपाः । १५ शास्त्राणि । १६ वै निश्चयेन तया लक्ष्म्या आढ्यः । १७ उच्चपर्वतस्तेन । १८ वा इवार्थे; नीचमातृजनितानि; पक्षे धात्री धरित्री ।

नृलोक इव लोकेषु[1] वयस्सु त्रिषु यौवनम् । वर्त्तमानश्च कालेषु यथा सर्वार्थसाधकः ॥ १० ॥

*तथाऽर्वाक्तनखण्डेषु मध्यमं खण्डमुत्तमम् । सर्वाङ्गीणसुखप्राप्तावलंकर्माणाविक्रमम् (युग्मम्)॥११॥

मुक्तोज्वलकणश्रेणीमण्डलैः क्षोणिकुण्डलैः । आस्ते तत्रातिसम्बाधो मगधाभिधमण्डलः ॥ १२ ॥

गावो यत्र वशोरस्थूला[2]ः सुव्रता[3]ः सुवशा इव । न वंशा[4]ः सूरचौराणां न वेशादोषदूषिताः ॥ १३ ॥

दुर्भिक्षदुर्गभङ्गाय गोलका इव मूढकाः । हैलय[5]श्च बभुर्यत्र यन्त्रवाहनयष्टयः ॥ १४ ॥

सरांसि यत्र भूयांसि सवयांसी[6]व नीरधेः । यत्पयांसि पयांसीव महांसीवावनिश्रियाम् ॥ १५ ॥

भुवो विशालशालेर्याः शाकशाकटसंकटाः । सनाथा रथकट्याभि[7]ः पवित्रा यत्र गोत्रया[8] ॥ १६ ॥

---

१ स्वर्गमर्त्यपातालेषु । २ वशया मेदसा । ३ सुखदोह्या गावः सुव्रताः सुनार्य इव स्वाधीनाः । ४ वश्याः । ५ वन्ध्यात्वदोपरहिताः । ६ महद् हलं हलिरित्युच्यते । महान्ति हलानि । ७ मित्राणि । ८ भूप्रदेशाः शालिक्षेत्राणि । ९ शाकस्य क्षेत्रं शाकशाकटम् । क्षेत्रे शाकशाकटशाकशाकिनौ इति साधुः; शाकक्षेत्रव्याप्ता इत्यर्थः । १० रथानां समूहो रथकट्या; "गोरथ-"॥६।२।२४॥ इति कट्यल्प्रत्ययः । ११ गवां समूहो गोत्रा; "गोरथ-"॥६।२।२४॥ इति त्रल् ॥

* तथैव त्रिषु इति पाठान्तरम् ।

बद्ध[1]मूला लसच्छाखा[2]ः सच्छाया[3]ः सुमन[4]ःप्रियाः । महाफ[5]लोदया यत्र सज्जना इव पादपाः ॥ १७॥

खलानां सत्कृतिर्यत्र बहिरेव, जने न हि ॥ १८॥

कण्ट[6]कौघश्च[7]तुर्दन्ती नायिकाया[8]ः प्रधानता ।

यत्र दानमकालेऽपि न मृत्युः सत्यशालिनाम् । कालेऽपि वृष्टिरेव स्यान्न कोपस्तु विवेकिनाम् (कुलकम्)॥

सौवर्णकलसज्योतिर्मालामुकुटमाण्डितम् ॥ २० ॥

तत्र काञ्चनसोपानभद्रपीठप्रतिष्ठितम् । उत्तुङ्गगङ्गा[11]यमुनाच्छत्राभ्यामिव राजितम् ॥ २१ ॥

उद्धूतकेत[10]कीरेणुधूपधूम्याभ्रमच्छलात् । पुरेषु राजराजश्रि रेजे राजगृहं पुरम् (विशेषकम्) ॥२२॥

ध्व[12]जाञ्चलचलच्चारुचामरालीमनोहरम् ।

---

१ मूलं चिरनिवासः, उपलक्षणात् आदिमूलम् । २ पक्षे पुत्रपौत्रादिशाखाः । ३ पक्षे छाया कान्तिः । ४ सुम-

नसः पुष्पाणि; पक्षे विद्वांसः । ५ पक्षे महाफलानि विवाह-यात्रा-प्रासादोद्धारणादीनि तेषामुदयः । ६ कण्टकाः खुण्टाः;

पक्षे शूलाः । ७ दन्ताली; पक्षे कलहः । ८ धान्यवपनस्थानं; पक्षे स्त्री । ९ धान्यशोधनस्थानं; पक्षे दुर्जनाः । १० केतकी-

रेणुः, धूपधूम्या = धूमकलिका, तयोर्भ्रमो भ्रान्तिः तस्याः छलात् । ११ गङ्गायमुनारूपे एव छत्रे ताभ्यां राजितम् । १२

प्रासादे सुवर्णदण्डस्थध्वजास्ते एव चामराणि, अन्योऽपि राजा एतै राजचिह्नैर्युक्तः स्यात् ।

यत्र[1] नेत्रशुभा-रामा बहिरन्तश्च रेजिरे । प्रियालापाः[2] सैना-रङ्गाः[3] पत्रवल्लीविराजिताः[4] ॥ २३ ॥
पथ्या-रम्भाभिरामाश्च[5] संवृताः[6] पाटलाधराः[7] । पुण्यपण्यैः[8] परीभोग्याः सुकुल्या[9] हंसविभ्रमाः[10] ॥२४॥
यत्र हर्म्याणि धर्म्याणि[11] विशालान्युज्ज्वलानि च । [12]कोटिप्राप्तपताकानि चरित्राणि सतामिव ॥ २५॥
कीर्त्यारोहणनिःश्रेणिगुणश्रेणिरपालयत् । रञ्जिताष्टादश[13]श्रेणिः श्रेणिकस्तत्पुरं नृपः (कुलकम्)॥२६॥

---

१ यत्र राजगृहे, नेत्रैः तदाख्यवृक्षैः, प्रधानवृक्षैर्वा शुभाः प्रधाना आरामा वनानि; पक्षे लोचनशुभा रामाः स्त्रियः। २ प्रियालं राजादनं, आप्नुवन्ति; पक्षे प्रिय आलापो यासाम् । ३ सह नारङ्गैर्विद्यन्ते याः; पक्षे सना कोऽर्थः सदा, रङ्गो यासां ताः । ४ पूर्वपक्षे पत्राणि, वल्लयश्च ताभिर्विराजिताः; अन्यत्र पत्रवल्ली रचनाविशेषो, मुखमण्डनम् । ५ हरीतक्यः, कदल्यश्च ताभिरभिरामाः; पक्षे सुखकराः, रम्भा इवाभिरामाः । ६ संवृताः वृतिसंयुक्ताः; पक्षे सावगुण्ठनाः । ७ पाटलां वृक्षं धरन्तीति; पक्षे पाटलः अधरो यासां ताः । ८ पुण्यानि पवित्राणि, पण्यानि वस्तूनि तैर्भोगार्हाः; पक्षे पुण्यं सुकृतं तदेव मूल्यं तैर्भोक्तुं योग्याः। ९ कुल्या अल्पाः कृत्रिमाः सरितः; पक्षे समीचीनकुलोत्पन्नाः । 'सुकुल्या तु कुलस्त्रियाम्'इति अनेकार्थे। १० हंसानां विलासः; पक्षे हंसवद्गमने विभ्रमो यासाम्; अथवा हंसकः पादकटकस्तस्य । ११ धर्मादनपेतानि; अत्र धर्म-पदेन वास्तुधर्मा उच्यन्ते । १२ कोटिद्रव्यसूचनाय न्यस्तपताकानि । १३ राज्ञामास्थानश्रेणयोऽष्टादश। तद्यथा । मल्ल १ आप्त २ हित ३ स्निग्ध ४ मन्त्रि ५ अमात्य ६ महत्तम ७ बुद्धिसख ८ उभयसख ९ आम्नायिक १० सांग्रामिक ११ देशीयपुरुष १२ मानपुरुष १३ धन्यपुरुष १४ कामपुरुष १५ विज्ञानपुरुष १६ राजपुरुष १७ विनोदपात्राणि १८ ।

भुजे धराधरे यस्य पु[1]ष्करावर्त्त उन्नतः । धाराधरः कृपाणोऽभूत् राजहंसप्रवासकः ॥ २७ ॥

स्वबलान्मोहराजस्य सप्ताङ्गीमिव सै[2]सकम् । निहत्य सत्यतो वीरक्रमाराधनमाप यः ॥ २८ ॥

यस्तथा त[3]न्मयो दध्रे भ्रा[4]मरध्यानधारणम्❀ । श्रीवीरविषयं[†] येन तादृगेव भविष्यति ॥२९॥

यस्य सि[5]द्धरसप्रायसम्यग्दर्शनभावितम् । आ[6]र राज्यं शिलासारमपि का[7]ञ्चन-वर्णिकाम् ॥ ३० ॥

प्रिया सुलक्षणा तस्य पौ[8]लोम्या इव लक्षणा । यन्नेत्रतो मृगी चि[9]ल्ला चेल्लणा नामतोऽस्ति सा ॥३१॥

शीलचन्द्र[10]मणेर्भूपशङ्का[11]पङ्कस्थितेरपि । जिनेन्दुवाग्रुचेर्यस्याः प[12]रं ज्योतिर्व्यजृम्भत ॥ ३२ ॥

---

१ श्रेष्ठो मेघः; पक्षे असिकोशसत्क आवर्त्तो यस्मिन् । २ सम्यक्त्वमिश्रमिथ्यात्वानन्तानुबन्धिनः कषायाः; पक्षे द्यूतादिव्यसनसप्तकम् । ३ स प्रकृतो वीरो यस्मिन् स तन्मयः । ४ "वीतरागं यतो ध्यायन् वीतरागो भवेद् भवी । इलका भ्रमरीभूता भ्रमरीध्यानतो यथा" ॥१॥ इति भ्रामरध्यानम् । ५ "तैलोदग १ लोहानल २ पयजल ३ पारयसुवन्न ४ सिद्धरसा ५ ॥ जीवाण धम्मरङ्गा आसन्नासन्नसिद्धीणं" ॥ १ ॥ इति सिद्धरसप्रायसम्यक्त्वभावितम् । ६ आर, प्राप । ७ लोहमपि रसभावितं काञ्चनवर्णिकां सुवर्णिकां आगच्छति; तथा राज्यमपि कांचन कोऽर्थः अपूर्वां वर्णिकां आर गतम् । ८ शच्याः समाना । ९ "छिन्ननेत्रे चिल्लचुल्लौ" इति नाममालातः हीनलोचनेति भावः । १० चन्द्रोपलस्य संशयपङ्कावस्थितस्य ११ "हहा तपस्वी भविता कथं स श्रुत्वेति देव्या वचनं सशङ्कः । प्रातर्जिनेन्दोर्वचनाद्विशङ्कः श्रीश्रेणिको हृष्टमना बभूव" ॥१॥ १२ प्रकृष्टम् ।

❀ भ्रामरध्यानधारणाम् इति वा पाठः । † श्रीवीरविषयामिति च पाठः ।

[1]चतुर्बुद्धिचतुःशालं [2]चतुरा पुण्यकुम्भिनः । कीर्त्तिकन्याचतुरिका [3]चतुष्कावसरः श्रियाम् ॥ ३३ ॥
तस्याभयकुमाराख्यः पुत्रो मन्त्रितया बभौ । चिन्तामणिः शिरोरत्नतया सुकृतिनः किल (युग्मम्)॥३४॥
[4]उपायांश्चतुरो [5]धर्मान् [6]गुणाना[7]वश्यकानि षट् । [8]अङ्गानि सप्त [9]क्षेत्राणि भूपालान् [10]द्वादश [11]व्रतान् ॥३५॥
[12]पञ्चाङ्गमन्त्रतत्त्वज्ञः सभ्यः सम्भावयन्नयम् । राज्ये धर्मे च धौरेयः शुशुभे निर्भयोऽभयः (युग्मम्)॥३६॥
तत्र धर्मधुरा भद्रः सुदानाङ्कद्रदन्तिवत् । भूतभाविभवद्भद्रः श्रेष्ठी गोभद्र इत्यभूत् ॥ ३७ ॥

---

१ "उप्पत्तिआ १ वेणइआ २ कम्मिआ ३ परिणामिआ ४॥ बुद्धी चउव्विहा उत्ता पंचमा नोवलब्भइ"॥१॥ चतुः-शालं गृहं बुद्धीनाम् । २ हस्तिशाला तु चतुरा; पुण्यकुम्भिनः धर्महस्तिनः । ३ चतुष्पथः । ४ साम १ दान २ भेद ३ दण्ड ४ रूपाश्चत्वार उपायाः । ५ दानशीलतपोभावनारूपाश्चत्वारो धर्माः । ६ संधि १ विग्रह २ यान ३ आसन ४ द्वैधीभाव ५ आश्रय ६ रूपाः षड् गुणाः । ७ सामायिकादीनि षडावश्यकानि । ८ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलरूपाणि सप्ताङ्गानि । ९ क्षेत्राणि जिनचैत्यादीनि । १० विजिगीषुः १ अरिः २ मित्रं ३ अरिमित्रं ४ मित्रमित्रं ५ अरिशत्रुः ६ पार्ष्णिग्राहः ७ आक्रन्दः ८ तयोरासारौ ९ कटके १० मध्यमः ११ उदासीनः १२ इति द्वादश राजकम् । ११ व्रतानि प्राणातिपातादीनि । १२ पञ्च परमेष्ठिनः; पक्षे कर्मणामारम्भोपायः १ पुरुषद्रव्यसंपत् २ देशकालविभागः ३ विनिपातप्रतीकारः ४ कार्यसिद्धिश्च ५ इति पञ्चाङ्गानि मन्त्राणि ।

कीर्त्या कैलाशसंकाशः स रत्नै रोहणाचलः। आ[1]श्रितावस्तुकाष्ठानां वस्तुत्वे मलयाचलः (युग्मम्)॥३८॥
भ्रान्तिं सु[2]मेरुरभ्रान्तस्त[3]तेने मित्र[4]कलावताम्। छेकां[4]श्छिच्छेद तामेष पुनः कनकदानतः॥ ३९॥
स[5]त्त्वेऽपि रत्नकोटीनां तस्य र[6]त्नत्रयी परम्। आसीददूषणं साधुकोटीरस्य विभूषणम्॥ ४०॥
मनोवाक्कायचेष्टासु धर्मस्तस्यावतिष्ठते। अर्थो वचसि कायेऽपि कामः काये कदाचन॥ ४१॥
नि[7]ष्पङ्काऽऽकाशगङ्गेव म[8]र्त्यगङ्गेव दोष[9]हृत्। निःसन्तापा च पातालगङ्गेव विशदाशया॥ ४२॥
च[10]न्द्रक्रीडाचकोरीव सदाऽऽनन्दविलोचना। सदा स[11]र्वर्तुकारामपिकीव प्रियभाषिणी॥ ४३॥
धर्मस्येव मनःशुद्धिरर्थस्येव नयस्थितिः। मदनस्येव मर्यादा भद्रा तस्याभवत्प्रिया (विशेषकम्)॥४४॥

---

१ आश्रितानि यानि अवस्तुकाष्ठादीनि करीरद्रुमादीनि तेषां च वस्तुत्वे गन्धकरणे, पक्षे आश्रितानां दीनादीनां ऋद्धिकरणे २ मेरुपर्वतः। अभ्रंकषः, पक्षे भ्रान्तिरहित.। ३ विस्तारितवान्। ४ सूर्यचन्द्रादीनां; पक्षे मित्राणि, कलावन्तः सुवर्णकाराः। ४ विदग्धः। ५ सतो भावः सत्त्वं तस्मिन्। ६ ज्ञानदर्शनचारित्रात्मिका रत्नत्रयी। ७ निष्कलङ्का। ८ भूगङ्गा। ९ "दृष्टा जन्मकृतं पापं स्पृष्टा जन्मशतत्रयम्। स्नाता जन्मसहस्रस्य हरेद्गङ्गा कलौ युगे"॥१॥ १० चन्द्र एव क्रीडा यस्याः सा चासौ चकोरी च, तद्वत्सदाऽऽनन्दविलोचना। ११ सर्वे ऋतवो यस्मिन् तच्च तदारामं च, तत्रस्था पिकीव कोकिलेव।

कार्येहानिमनार्योणां यच्छतीव मृतिं रुषाम्। नस्व्य मदाना विश्वेषा बुद्धिनाशं च दुर्धियाम् ॥४५॥
कलिं निःशेषदोषाणां जयं पत्युर्वितन्वती। भद्रा-भद्राय सा किं तु चतुःषष्टिकलान्विता (युग्मम्)॥४६॥
अनयोर्नर्मदोत्संगकेलिकल्लोललोलयोः। कियानपि ययौ कालः करेण्वोरिव भद्रयोः ॥ ४७ ॥
चैङ्गः संगमकस्याथ जीवः पीवरपुण्यभूः। अतन्द्रभद्रदन्तीव भद्राकुक्षाववातरत् ॥ ४८ ॥
तुङ्गस्तम्बकरिस्फातिनम्रशूकशिखामुखम्। गोपीगीतोद्धतं राजशुकराजिविराजितम् ॥ ४९ ॥
शालिग्रामादिवायातं तत्प्रीत्या सा निशात्यये। शालिक्षेत्रं परीपाकपिशङ्गं स्वप्नमैक्षत (युग्मम्)॥५०॥
तुच्छेऽवकरकूटाभे कुले लब्धोदयः पुरा। रोपितः सुकुले वप्रे शालिस्तम्बसमो हि सः ॥ ५१ ॥

---

१ गोभद्रपत्नी, पक्षे विष्टिः "वाण ५ द्वि २ दिग् १० जलधि ४ पद् ६ त्रिषु ३ नाडिकासु, वक्त्रं १ गलो २ हृदय ३ नाभि ४ कटा ५ श्च पुच्छम् ६॥ विष्टेर्विदध्युरिह कार्य १ वपुः २ स्व ३ बुद्धि ४ प्रेम ५ द्विषां ६ क्षयमिमेऽवयवाः क्रमेण"॥१॥ एवं भद्रा ३० कला। सा ६४ कला। सा अभद्राय। इयं तु भद्राय। २ नर्म हास्यं ददातीति नर्मदः सचासौ उत्सङ्गः; पक्षे नर्मदा नदी। ३ मनोज्ञः। ४ तुङ्गा उच्चा ये स्तम्बकरयो व्रीहयः। ५ गोप्यः क्षेत्ररक्षिकाः स्त्रियस्तासां गीतानि तैरुद्धतं युक्तम् तत्कोलाहलाढ्यम्। ६ शुकेषु राजान इव राजशुकाः। ७ सङ्गमभवस्नेहादिव। ८ क्षिप्तधूल्यादिपुञ्जनिभे। ९ केदारे।

[1]सकर्णा [2]वर्णिनी [3]तूर्णमेत्य पत्युर्वितत्य सा । तेने तमर्थमत्यर्थं [4]कर्णजाहावगाहिनम् ॥ ५२ ॥
[5]अनूपविपुलाशालिक्षेत्रवत्सौरभाद्भुतम् । [6]गोपीगीतगुणग्रामं [7]सुवयस्यशुकप्रियम् ॥ ५३ ॥
परिपाके च [8]माधुर्यधुर्यतावर्यताऽऽस्पदम् । सुतं [9]प्राप्ससि तामेवमभ्यनीनन्ददाशु सः (युग्मम्) ॥५४॥
तैलकन्दमहारत्नं [10]पातालमधुसेवधिम् । सर्वंसहेव तं गर्भं महनीयमुवाह सा ॥ ५५ ॥
[11]तैलकन्दाद्यथाऽन्तस्थादिला स्नेहाबिला बहिः । तथाऽ[12]स्मादानधीकन्दादम्बाऽभूद्दानदोहदा ॥५६॥
सुखेऽपि त्रिबुधाः सद्यः पूर्वस्नेहं त्यजन्त्यहो । सस्मरे दानमित्रस्य गर्भदुःखेऽपि तेन तु ॥ ५७ ॥
तस्य दानादरः पश्य पारदः [13]कटरे स्थिरः❀ । [14]चिन्मूषायां गर्भदुःखाग्निना यत्नोद[15]डीयत ॥ ५८ ॥

---

१ विदुषी । २ स्त्री । ३ शीघ्रं, आगत्य । ४ कर्णस्य मूलं कर्णजाहं; "कर्णादेर्मूले-"॥७।१।८८॥ इति जाहप्र०; कर्णमूले इत्यर्थः । ५ सजलभूस्थशालिक्षेत्रवत् सुगन्धताऽऽस्पदम् । ६ गोप्यः क्षेत्ररक्षिकाः; पक्षे राज्यः । ७ शोभनं वयो येषां ते सुवयस्यास्तरुणा ये शुकास्तेषामभिमतम् ८ माधुर्य्ययुक्तवस्तुषु धुर्यता मुख्यत्वं, वर्यता वर्यत्वं तयोरास्पदं स्थानम् । ९ प्राप्स्यसि पुत्रम् । १० पातालमधुसेवधि, कोऽर्थः अमृतकुण्डसमं तैलकन्दनाम्ना रत्नविशेषम् । ११ स्फटिकरत्नविशेषः । १२ सङ्गमकजीवात् । १३ आश्चर्यभूतम् । १४ चैतन्यमूषायां, स्वर्णादिद्रव्यमग्नौ द्रवीकरणाय यस्मिन्पात्रे विन्यस्यते तन्मूषा । १५ डीङ्च् विहायसां गतौ धातुः, ह्यस्तन्यामात्मनेपदे "दिवादेः श्यः"॥३।४।७२॥ इति श्यः । ❀ स्थित इति पाठान्तरम् ।

[1]वासस्य धातवः सीमा [2]पूर्वाः क्षीणास्तु [3]तस्य ते । असंपूर्णेषु नव्येषु दानवासस्तदद्भुतम् ॥ ५९ ॥
[4]दोहदं सौहृदश्रेष्ठः श्रेष्ठी विज्ञाय [5]सोऽन्यदा । त्वरया पूरयामास [6]श्रीमतां हि स्पृहा महः ॥ ६० ॥
[7]सर्वाङ्गीणैर्दयादानैः पात्रदानैर्गुणोत्तरैः । प्रववर्षांशु वर्षावद्भद्रा [8]गोर्भद्रहर्षदा ॥ ६१ ॥
अतिक्रान्तेषु मासेषु नवस्वथ दिनेष्वपि । किंचिन्न्यूनेषु नवसु ग्रहेपूच्चास्थितेपु तु ॥ ६२ ॥
भद्रा [9]नवसुवर्णाभं पूर्वेव दिवसेश्वरम् । कल्याण[10]कमलोल्लासमसूत सुतमर्चितम् (युग्मम्)॥ ६३ ॥
दीपोत्सवः पुत्रजन्मोत्सवस्यांशो न षोडशः । सदा मङ्गल्यरूपस्य सन्ततोद्योतदायिनः ॥ ६४ ॥
विचिन्त्येत्यविचिन्त्यश्रीः [11]सुभगंभावुकस्थितिः । [12]निर्विगीतैः सुसंगीतैर्गुप्तिमो[13]क्षैसलक्षणैः ॥६५॥

---

१ वासो हि सप्तधातून् यावद् भवति। २ सङ्गमभवप्रतिवद्धाः । ३ सङ्गमस्य । ४ मातुर्दानवाञ्छाम् ।५ अन्यास्मिन् दिवसे । ६ महानेष उत्सवः यन्महतां वाञ्छा जायते । ७ सर्वाणि च तानि अङ्गानि च सर्वाङ्गेभ्यो जायन्ते इति सर्वाङ्गीणानि। “सर्वादेः-”॥७।१।९४॥ इति ईनप्र०। ८ निजपतिः; पक्षे गावश्च भद्राश्च वृषभाश्च तेषां हर्षदा। ९ सुवर्णमङ्गलम्। १० लक्ष्मीः, सरोजं च। ११ असुभगः सुभगो भविष्णुः सुभगंभावुकः । “नग्नपलितप्रियान्धस्थूलसुभगाढ्यतदन्तात् च्व्यर्थे-” ॥५।१।१२८॥ इति सूत्रेण खुकञ्। वृद्धिर्मोन्तश्च कर्तव्यौ । १२ निर्दोषैः । १३ बन्दिमोक्षणम् ।

सर्वपात्रीणसन्मानदानै—रुघद्ध्वजव्रजैः । श्रीश्रेणिकनृपादेशादलंकर्माणविक्रमैः ॥ ६६ ॥

पुत्रजन्मोत्सवारम्भैः श्रेष्ठी गोष्ठीकृतालकम् । चक्रे राजगृहं साक्षात् सर्वं राजगृहं पुरम् (चतुर्भिः कलापकम् )

सोऽथ चैन्द्रार्कमालोक्य षष्ठीजागरपूर्वकम् । वितेने नामकरणं सुभगंकरणं श्रियाम् ॥ ६८ ॥

मातृस्वप्नानुसारेण सर्वस्वजनसाक्षिकम् । शालिभद्र इति ख्यातं स्वसूनोरभिधां व्यधात् (युग्मम्)॥६९॥

स्नेहः सतां विनीतानां गुणौघोऽभ्यैस्यतां श्रुतम् । श्रीपूर इव धन्यानां प्राप वृद्धिं क्रमेण सः ॥ ७० ॥

व्रतं समितयः पञ्च नाटकं सन्धिशुद्धयः । तत्त्वप्रवृत्तयः प्राणं स्मरमिन्द्रियवृत्तयः ॥ ७१ ॥

करणस्थितयो राज्यमिव सर्वार्थसाधकम् । धात्र्यः सर्वोपधाशुद्धाः सकलास्तमलालयन्*(युग्मम् )॥७२॥

---

१ सर्वपात्रेभ्यो योग्यानि सर्वपात्रीणानि "सर्वादे-"॥७।१।९४॥ इति ईनः प्रत्ययः।२ गोष्ठ गोकुलं, यत्र गावस्तिष्ठन्ति, अगोष्ठा गोष्ठीकृता अलका धनदनगरी येन, राजगृहेण । ३ चन्द्रश्चार्कश्च तयो. समाहारश्चन्द्रार्कम्, लोकप्रसिद्ध आचारविशेषः । ४ विद्यार्थिजनानां शास्त्रम् । ५ इर्यासमिति, भाषासमिति, एषणादिरूपा. । ६ मुख १ प्रतिमुख २ गर्भ ३ विमर्श ४ निर्वहणाख्याः पञ्च सन्धयः । ७ पृथ्व्यप्तेजोवाय्वाकाशरूपाः । ८ स्पर्शनदर्शनादय' । ९ श्रीकरण १ व्ययकरण २ मध्यकरण ३ धर्माधिकरण ४ पुराधिकरणानि पञ्च । १० "भिया धर्मार्थकामैश्च परीक्षा या तु सोपधा"। इवशब्दः सर्वत्र योज्यः पञ्चसु शब्देषु ।

*—मलीललन्निति पाठान्तरम् ।

रिंषणं क्रमणं किञ्च जेमनं पिण्डवर्द्धनम् । जलपश्चेलोपनयनं वत्सरग्रन्थिबन्धनम् ॥ ७३ ॥
अन्यान्यपीत्थं कृत्यानि महेन महता पिता । कारयामास सोल्लासः श्रीरेवं हि [1]फलेग्रहिः ॥ ७४ ॥
स [2]भूरिसंभृतावापः शोणहस्तपदच्छदः । [3]रसालः शालिभद्रोऽयं शालते प्रोल्लसद्[4]द्विजैः॥७५॥
[5]दन्तावलमलं बालं [6]पुन्नागा [7]गोत्रजा [8]वशाः । [9]सनीडाः क्रीडयन्ति स्म प्रसरत्कर[10]पुष्कराः ॥ ७६ ॥
[11]काञ्चनाम्भोजयोस्तस्य पदोः [12]कनकघुर्घुराः । [13]तदीयरेणुपिङ्गाङ्गा [14]रेणुर्भृङ्गा इवानिशम् ॥ ७७ ॥
[15]प्रालम्बिका प्रलम्बाऽस्य बभौ कण्ठावलम्बिता । वयसः प्रथमस्येव केलिदोला चलाचला ॥ ७८ ॥

---

१ फलं गृह्णाति "रजःफलेमलाद् ग्रहः" ॥५।१।९८॥ इति इः प्रत्य०। २ सुवर्णस्य संभृतं धृतं कङ्कणं येन; पक्षे भूरि अत्यन्तं संभृतं भृतं अवापः स्थानकम्। ३ आम्रः। ४ द्विजाः पक्षिणो दन्ताश्च। ५ उद्गतदन्तं बालं; पक्षे कलभकं; "कृष्यादिभ्यो-"॥७।२।२७॥ इति वलच्प्रत्ययः। ६ हस्तिनः; पक्षे पुरुषश्रेष्ठाः, वृक्षविशेषाश्च। ७ पर्वतजाः; पक्षे गोत्रिणः। ८ वशीभूताः, हस्तिन्यश्च। ९ समीपस्थाः; पक्षे सकुलायाः। १० पुष्करं शुण्डाग्रं, पक्षे कमलम्। ११ सुवर्णकमलतुल्ययोः। १२ सुवर्णघुर्घुराः। १३ घुर्घुरसंबन्धिना रेणुना पिशङ्गिताङ्गाः। १४ रेणुः, शब्दं चक्रुः। अण, रण, वणेत्यादि दण्डकधातोर्निष्पन्नं रेणुः क्रियापदम्। १५ हारविशेषः।

स[1]रङ्ग—चञ्चु—चरणः सद्गतिर्मधुरस्वरः । व[2]लक्षपक्षपक्षीव काकपक्षधरोऽप्यभूत् ॥ ७९ ॥

पुरीषशूकराः केचिच्चापल्यकपयः परे । मायागोमावयः केऽपि बाला व्या[3]ला इवेतरे ॥ ८० ॥

पावित्र्यप्रीतिजात्याश्वः संलीनाङ्गत्वकच्छपः । स तु सिंह इवौजस्वी श[4]मवान् शमवानिव (युग्मम्) ८१ ॥

पित्रोः पु[5]ण्यविवर्त्तोऽसौ सौभाग्योपरि मञ्जरी । मज्जेव सुखबीजस्य जीवितस्यापि जीवितम् ॥ ८२ ॥

उ[6]पाध्यायाय शुद्धाय सा[7]र्थेशोऽर्थमिव प्रियम् । तं क[8]लान्तरलाभाय सर्वसाक्षिकमर्पयत् ॥ ८३ ॥

स नम्रीभूय निभृतः कलाचार्यात्कलाऽमृतम् । पपौ स्थि[9]रोपकाराय क्षीराम्भोधेरिवाम्बुदः ॥ ८४ ॥

साधुविभक्तिसंबन्धकारकैः शब्दसिद्धिदैः । गुणवृद्धिकृतकृ[10]त्यैः स नित्यं जज्ञे सलक्षणः ॥ ८५ ॥

सविवेकैरलङ्कारैः सभ्याविर्भाविते रसैः । सु[11]रीतिवृत्तिभिश्चायमभूत्साहित्यशोभितः ॥ ८६ ॥

---

१ लाक्षादिरागैर्मनोज्ञचरणः । २ राजहंस इव । ३ दुष्टगजा इव । ४ उपशमवान् यतीव । ५ पुण्यपरीपाकः । ६ पाठकाय; पक्षे अधमर्णाय; उपाधिना आयो लाभो यस्य, उप समीपे आधिरेवंविध आयो यस्य वा असौ । ७ गोभद्रः । ८ पक्षे कुसीदलाभाय । ९ पक्षे स्थिरा पृथ्वी तस्या उपकाराय । १० कृत्यैः कार्यैः; पक्षे कृत्यप्रत्ययैः । ११ पक्षे रीतयो वैदर्भी-पाञ्चालीगौड्यः । भारती १ शास्वती २ कैशिकी ३ आरभटी ४ रूपाश्चतस्रो वृत्तयः ।

भेजुस्तं सपदि प्रीताः कलाद्वासप्ततिः कलाः । चक्रवर्त्ती कलाचक्रे धर्मस्तत्रोपितोऽस्ति यत् ॥८७॥

अथ शालेर्मनोज्ञानां भूपरूपं निषेवितुम् । अवाततार तारश्रीपावनं यौवनं वयः ॥ ८८ ॥



हीनवर्णेन तद्वर्णात्सुवर्णेन स्विकाऽऽहुतिः । तद्वर्णार्थमिवात्यर्थमग्नितीर्थे समर्थ्यते ॥ ८९ ॥

यच्छायाऽऽतङ्कतः शङ्के साशङ्कं राजचम्पकम् । आस्ते संकुचितं किंचिद्राजानिश्रां न मुञ्चति ॥९०॥

कल्याणकदली यस्य कायकान्त्येव दण्डिता । स्वल्पान्तररसा जज्ञे सकृत्तेन फलेग्रहिः ॥ ९१ ॥

प्रभया[2] प्रभया यस्य तनोः कनककेतकी । गोपायितुमिवात्मानं विधत्ते कण्टकैर्वृतिम् ॥ ९२ ॥

तदंह्रिवादतः पद्मं शङ्के पङ्केऽक्षिपद्विधिः । लक्ष्मीपुष्पैरिव[3] नखैर्जित्वरौ तावपूपुजत् ॥ ९३ ॥

प्रव्यक्तनखरत्नौघं निर्भयं तत्पदद्वयम् । सभयं जलदुर्गेऽस्थात् पद्मं गुप्तवराटकम्[4] ॥ ९४ ॥

शङ्के शशाङ्करङ्को[5]ः किं जङ्घे आदत्त सोऽनघे । दीन आसीन एवास्ते तच्चमूरुरनूरुवत्[6] ॥ ९५ ॥

तस्य कान्तिहृदे देहे हारहंसावलिश्रिते । गम्भीरा दक्षिणावर्त्ता नाभिर्भाति स्म कुम्भिनी[7] ॥९६॥

---

१ शालिशरीरवर्णात् । २ प्रकृष्टं भयं यस्याः सा । ३ पद्मरागमणिभिः । ४ गुप्तबीजकोशम् । ५ चन्द्रमृगस्य । ६ तस्य चन्द्रस्य चमूरुर्मृगः पङ्गुवत् । ७ हस्तिनी ।

विशालतां हृदस्तस्य सकलाः कलयन्ति के । यत्प्राप श्रीसरस्वत्योः प्रियमेलकतीर्थताम् ॥ ९७॥

चिरं विरेजतुस्तस्य भुजावाजानुयायिनौ । हृद्वासिदानदन्तीन्द्रदन्ताविव सकङ्कणौ ॥ ९८॥

नाम्भोधेः किन्तु कल्पद्रोः प्रवालानि निदानताम् । ईयुस्तत्करयोस्तेन पाटलौ दायकौ च तौ ॥९९॥

रेखात्रयाङ्कितस्तस्य कण्ठः कण्ठीरवाकृतेः । तत्रानवद्यत्रैविद्यन्यासं प्रादुष्करोत्यहो ॥१००॥

यत्नात्षोडश रत्नानि द्विधा वेधा विभिद्य किम् । द्वात्रिंशद्दशनीं तस्य निर्ममे निर्मलां समाम्॥१०१॥

यौवनानङ्गयोर्योग्यौ स्वर्णपीठस्फुराविव । कपोलौ कल्पयामास वृत्तौ मध्योन्नतौ विधिः ॥१०२॥

उपमाद्रव्यकोटीषु कोटिं प्राप्ते तदानने । नाशावंशोध्वजो रेजे भ्रमद्भ्रूवैजयन्तिकः ॥१०३॥

स्वश्रीकाभ्यां तदक्षिभ्यां वनवासि तपस्वि च । स्पर्द्धतामुत्पलं राजवशोन्मेषानिमेषि किम् ॥१०४॥

---

१ खेटकाविव । २ कोटिः प्रकर्षः, संख्या च । ३ दण्डः । ४ स्वेनैव आत्मनैव श्रीर्ययोस्तौ च आभ्याम् । दिने न भोजि यतो दिने संकुचति अतएव तपास्वि किं स्पर्धतां, राजा चन्द्रस्तस्य, वशौ परवशौ निमेषोन्मेषौ यस्य, परवशमिति भावः; पक्षे संकोचविकाशौ ।

भालं भाऽलङ्कृतं तस्याष्टमीचन्द्रोदयः स्फुटम्। यत्कान्तिः क्षणदाङ्गार्द्धं[1] मुखं प्लावयतेतराम्॥१०५॥
कबरी कज्जलश्यामा भाति तस्य स[2]चम्पका। स्वर्णाक्षरा स्मरजयप्रशस्तेरिव पट्टिका॥१०६॥
रूपमन्यमनुष्याणां वर्ण्यमानमधः पतेत्। उच्चैरेव पुनस्तस्य स्वर्गि[3]वर्गोत्तमाकृतेः॥१०७॥
तेन श्रुतेन दृष्टेन चि[4]त्तचित्रकृतेन वा। जनोऽभिहि[5]तमात्रेण धर्मेणेव कृतार्थितः॥१०८॥
दृशः[6] पातालबालानां तद्रूपालोकवञ्चिताः। चक्षुःकर्णतयाऽऽकर्ण्य तत्कीर्त्तीर्जहृषुः सुखात्*॥१०९॥
तद्रू[7]पमिव तद्रूपं तद्वचस्तद्वचः कि[8]ल। तद्भाग्यमिव तद्भाग्यं तद्गुणास्तद्गुणा इव॥११०॥

---

१ क्षणं उत्सवं ददाति इति, क्षणदं यदङ्गं तस्यार्द्धं मुखं प्लावयते द्योतयति; मुखं शरीरार्द्धमिति श्रुतेः। तस्य भालं ललाटं अष्टमीचन्द्रोदय एव; पक्षे क्षणदाया रात्रेः प्रहरद्वयं यावत्। २ चम्पकपुष्पयुता। ३ स्वर्गिणो देवास्तेषां वर्गोत्तमवत् आकृतिराकारो यस्य एतावता महासौभाग्यमुक्तम्। ४ चित्ते चित्रवत्स्थापितेन। ५ उक्तमात्रेण। ६ नेत्राणि नागाङ्गनानां शालिभद्रालोकनवञ्चितानि। चक्षूंष्येव कर्णा यासां ताश्चक्षुःकर्णास्तासां भावः चक्षुःकर्णता तया। ७ उपमानोपमेयभावः शालिभद्ररूपवचनभाग्यगुणानां ज्ञेयः। ८ किल इवार्थे॥ * सुखमित्यपि पाठः।

फलं लक्षणवृक्षाणां चक्रिभोगाः किलोत्तमम्। वर्ण्यतां[1] तानि किं तस्य द्युभोगा[2] यस्य भाविनः॥११॥

धर्मस्त्रिवर्गे[3] धर्मेषु[4] दानं दानेष्वपि त्रिषु[5]। अन्नदानमथान्नेषु सुकुमारं हि पायसम्[6] ॥११२॥

यद्देह[7]स्तदुपादान[8]निदानं ह्याददे ततः। कुमारः सुकुमारेषु सुषमारेखया[9]ऽरुचत् (युग्मम्) ॥११३॥

वनं चैत्ररथं[10] यद्वच्चैत्र[11]मैत्रीपवित्रितम्। पुत्ररूपं तथाऽऽलोक्य तारुण्यसफलीकृतम्*॥११४॥

गोभद्रः सर्वतो भद्रश्लोकान्वेषी[12] व्यचिन्तयत्। अन्योऽन्यसदृशीर्बालाः कविर्वर्णावलीरिव (युग्मम्) ॥

पद्मास्याः पद्मनिःश्वासाः पद्मोपमकर[13]क्रमाः। पद्मनाभीः पद्मनेत्राः पद्मिनीस्तत्र चान्तरे ॥११६॥

---

१ ऊर्ध्वरेखायवहस्तपादौष्ठरक्ततादीनि शालिभद्रस्य तानि लक्षणानि किं विद्वद्भिर्वर्ण्यताम्। २ दिवो भोगा द्युभोगाः। "उः पदान्ते-" ॥२।१।११८॥ इति वस्य उः। ३ धर्मार्थकामेषु। ४ दानशीलतपोभावेषु। ५ ज्ञानदान १ अभयदान २ अन्नदानेषु ३। ६ परमान्नं तु पायसम्। ७ शालेर्देहः। ८ उपादानं परमान्नं मुख्यं कारणं पूर्वम्। कारणानि त्रीणि; उपादान, निमित्त, सहकारिरूपाणि। कारणानुगुणमेव कार्यमिति न्यायात्। ९ सुषमारेखया परमशोभारेखया सातिशायिन्या। १० धनदस्य वनम्। ११ चैत्रमासस्य। १२ यशोऽभिलाषी। १३ हस्तौ च पादौ च॥ * तारुण्य-सकलीकृतमित्यपि पाठः।

लि० कन्या द्वात्रिंशतं धन्याः कुलशीलगुणैः समाः। महेभ्यास्तत्रवास्तव्याः कुमारार्थमुपानयन् (युग्मम्) ११७

विद्याऽधिदेवता मूलोत्तरवैक्रियमूर्त्तयः । स्वःस्त्रीकोट्यष्टकात् किं वा चतुष्काष्टकमुद्धृतम् ॥११८॥

२९॥ व्यन्तरेन्द्रश्रियः सर्वा द्विधेन्दोर्वा कलाः कृताः। सप्रभाः प्रतिभासन्ते या रूपातिशयश्रिया (युग्मम्) ॥

श्रीसन्नाहः सार्थवाहः सोत्साहस्वजनस्ततः । व्योममण्डलविस्तारं विधाय वरमण्डपम् ॥१२०॥

पुष्पप्रकरनिक्षेपैर्वसन्तसमयायितम् । काश्मीररस्तबकालोकैः स्मेरकश्मीरविस्मयम् ॥१२१॥

दिव्यैर्दूष्यैरलङ्कारैः सुपर्वनगरायितम् । नागवल्लीदलैः पूगपूगैः कौङ्कणकोणितम् ॥१२२॥

नृत्तप्रवृत्तसङ्गीतैर्गान्धर्वनगरोपमम् । मङ्गलोलूलुकल्लोलैः स्मेरैस्मरजयारवम् ॥ १२३ ॥

प्राज्यभोज्याज्यसाम्राज्यैः पक्वान्नैर्व्यञ्जनैरपि । फलावलीपयःपूरैः विश्वावारितसत्रवत् ॥१२४॥

सन्मान्यमानस्वजनं प्रीतयाचकचातकम् । अवार्यतूर्यनिर्घोषं जिनार्चाभिरधिष्ठितम् ॥१२५॥

---

१ व्यवहारिणो धनवन्तः । २ राजगृहवासिनः । ३ क्रमुकसमूहैः । ४ विकस्वरम् ।

प्रगल्भाभिः पुरन्ध्रीभिः सत्यापितविधिक्रमम् । लक्ष्मीपूरपरीवाहं वीवाहं सुमहामहम् ॥१२६॥
कारयामास भद्रायाः पौलोम्योः पुलकावहम् । गोभद्रः शालिभद्रस्य जयन्तस्येव वासवः (अष्टभिः कुल०)
निरन्तरस्फुरद्व्याख्या विषमेष्वर्थदीपिकाः । कामसूत्रे चिरण्टीकाश्चिरण्टीः कायवर्त्तराः ॥१२८॥
विभाव्य भूषणानीन्दुविभाव्ययकराण्यदात् । ताभ्यश्चक्षुर्महेभ्यः स महेभ्यः सभ्यसौरभः (युग्मम्)॥
चक्रादिलक्षणव्यूहा गुणाढ्यचतुराञ्चिताः । गुरुडम्बरशृङ्गाराः कायमानमनोरमाः ॥ १३० ॥
गजेन्द्रगतिविस्तारा गैन्धर्वकलया कलाः । शताङ्गगुणसन्दोहाः पदातिरुचिराश्रियः ॥ १३१ ॥
उत्सर्पद्दर्पकन्दर्पराजराजस्य दिग्जये । ताः शालिकलिताः सेनाः सेना आवासिता इव (विशेषकम्) ॥
असौ हिरण्यवर्णासु तास्वन्तःप्रतिबिम्बितः । रसोर्मिलालितोऽप्यागात् सुधामूर्त्तिर्न लोलताम् ॥
रङ्गभूमौ मिलन्तीभिर्गजेन्द्रगतिविभ्रमात् ॐ । स तौभिः प्रीतितृप्ताभिर्नारीकुञ्जरतां ययौ ॥१३४॥

---

१ सत्यतामापादितम् । २ गेहम् । ३ महोत्सवम् । ४ पत्न्याः । ५ इन्द्राण्या इव । ६ पक्षे विषमेषुः कामः । ७ वधूटयः । ८ प्रकृष्टदेहाः । ९ अश्वानाम् । १० पक्षे नदीषु । ११ शालिभद्रस्त्रीभिः ॥ ॐ गतिभिर्भ्रमादिति च पाठः ।

कुलावतंसकः सोऽथ स्वप्रासादावतंसके । मृदङ्गोत्तुङ्गधोङ्कारैः सुखोङ्कारैरिव स्फुटम् ॥ १३५ ॥
प्रवीणवीणाझात्कारैः सत्यंकारैर्मनोऽर्पणे । गीतैर्दिव इवानीतैर्लास्यैरास्यैर्मुदामिव ॥ १३६ ॥
विषमायुधभूपस्य कटकैरिव नाटकैः । निन्ये कालं स पञ्चाङ्गैर्मोहमन्त्रसखैः सुखैः (त्रिभिर्विशे०)॥
आद्यन्तग्रहणे, मध्यस्यापि ग्रहणमित्यसौ । आद्यन्तग्राहितामूहे त्रिवर्गे स्वार्गिवर्गवत् ॥ १३८ ॥

रत्नावापनिपातिकान्तिसलिलः स्वर्णोज्ज्वलस्कन्धभू-
लक्ष्मीपुष्पसुपल्लवो मरकतप्रोल्लासिपत्रावलिः ।
मुक्तापुष्पभरः प्रकल्पितफलः पुण्याढ्यदृग्गोचरः
सोऽयं कल्पतरुः स्वलङ्कृततनुः श्रीशालिभद्रः किल ॥ १३९ ॥

प्रासादे लसदिन्द्रनीलकिरणालक्ष्यप्रवेशान्तरे
कृष्णाङ्गागरुधूम्यया[1]ऽथ कबरीकान्त्या तमःसंभृते* ।

---

१ कङ्कणम् । * तमःसंसृते, तमःपूरिते; तमःसंवृते इति च त्रयः पाठाः ।

कान्तानां वदनेन्दुभिर्मणिमयालङ्कारभाभिः प्लुते
नो जानात्युदितं नचास्तमितमप्युद्यद्दिनश्रीरयम् ॥१४०॥

श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नधिया शुद्धे द्वितीयः प्रक्रमोऽभवत् ॥ १४१ ॥

## इति श्रीशालिभद्रचरिते जन्मविवाहवर्णनो नाम द्वितीयः प्रक्रमः ॥



अथ श्रीशालिसौभाग्यभाग्याभोगसुधाम्बुधेः । सुपर्वसन्निधेर्वेलावृद्धिहेला विलोक्यताम् ॥ १ ॥
गोभद्रश्चिन्तयामास सुतास्याम्भोजवीक्षणम् । यतिधर्माध्वपान्थस्य ममास्तु शकुनः शुभः॥ २ ॥
यतो द्यूतमिव प्रायः केऽपि वित्तहृतः सुताः । पूर्णं प्राणमिवान्ये तु चिन्तासन्तापहेतवः ॥ ३ ॥

१ पूर्णिमासन्निधेः । पक्षे सुपर्वाणो देवाः ।

अगण्यपुण्यतर्केऽपि सम्पदानन्ददायिनः । संपूर्णीकृतधर्मांशा द्विजाः कृतयुगोपमाः ॥ ४ ॥

असौ मम पुनः सूनुः श्रीवृद्धौ[1] कृष्णाचित्रकः । चिन्ताशल्यविशल्येव धर्ममन्दारनन्दनम् ॥ ५ ॥

चतुरेऽनातुरे धीरे द्विधाऽस्मिन् भाद्रमातुरे[2] । मुद्वहे न्यस्य तद्भारमुद्वहे[3] व्रतमुद्वहे ॥ ६ ॥

सुप्रतीके[4] साति प्रीते प्रतीते दिग्गजेऽङ्गजे । नैशानीं[5] यस्त्यजत्याशां सत्यं पशुपतिः[6] स तु ॥७॥

तद्रूपास्तेऽत्र चिद्रूपाः ईश्वरास्ते च भास्वराः । श्रीवीरं वरिवस्यन्ति नमस्यन्ति च ये सदा ॥८॥

एवं भावयते तस्मै सद्य उद्यानपालकः । श्रीवीरागमनं नीरागमनं धर्मवीरुधाम् ॥ ९ ॥

विज्ञायाऽभ्येत्य विज्ञाय सुपुण्याय व्याजिज्ञपत् । स्पृहामात्रं विलम्बो हि प्रियप्राप्तौ महात्मनाम् (युग्मम्)॥

अथ स्नातानुलिप्ताङ्गः शुचिवस्त्रविभूषणः । आर सारपरीवारः श्रीवैभारधराधरम् ॥ ११ ॥

---

१ काली चिन्तामणिः । आविष्टलिङ्गत्वात् । २ सत्यास्तु तनये सांमातुरवद् भाद्रमातुरः । भद्रा माता यस्यासौ तस्मिन् । ३ उद्वहोऽङ्गात्मजः सूनुः । ४ सुप्रतीके शोभनाङ्गे । पक्षे सुप्रतीकनाम्नि गजे । ५ गृहस्वामिताऽऽशां; पक्षे ऐशानीं दिशम् । ६ पक्षे ईश्वरः । ७ पण्डिताः । ८ जगाम ।

स त्रिः प्रदक्षिणीकृत्य वर्द्धमानशुभाशयः । श्रीवर्द्धमानमानम्य सम्यग् शुश्राव देशनाम् ॥१२॥ प्र०

तृष्णाकारिणि संसारे मरावपतराविह । धर्मो दशभिदो भिन्नः किल कल्पद्रुमायते ॥ १३ ॥

घनागमस्य मूलेन शुचिना वचसा विभोः । स शुक्लपाक्षिकत्वेन धर्ममानसमानशे ॥ १४ ॥

स स्वामिनमनुज्ञाप्य याप्ययानेऽधिरुह्य च । गृहमागत्य सुप्रीतः प्रेयसीमित्यभाषत ॥ १५ ॥

वामाङ्गसङ्गतां मुष्टिग्राह्यमध्यां सुवंशजाम् । आसन्नभव्यजीवां च कषरेखापरीक्षिताम् ॥ १६ ॥

बिभ्राणां मार्गणांश्चापयष्टिवत् त्वामवाप्य हे । धर्माभ्यासवतां सीमा सीमन्तिनि ! किलाभवम् (युग्मम्)

त्वं च पुण्यप्रतिष्ठाना फलकान्तगुणोच्चया । असङ्ख्यगुणलाभार्थमङ्गिनी मङ्गिनीव मे ॥ १८ ॥

त्वया सुधाऽनुवादिन्या रससिन्ध्वेव मूर्त्तया । साधुसिद्धः प्रसिद्धोऽस्मि दाता भोक्ताऽप्ययाचकः ॥१९॥

साम्प्रतं पुत्रमित्रादिसंबन्धाप्रतिबान्धिनः । अभ्यामित्रीणतां मोहशत्रुं प्रति यियासतः ॥ २० ॥

---

१ निर्वृक्षे । २ क्षान्त्यादिना । ३ शुचिना पवित्रेण; पक्षे आषाढमासेन । ४ पक्षे राजहंसत्वेन । ५ शिबिकादिना । ६ पक्षे जीवा प्रत्यञ्चा । ७ किल धनुः सुवर्णरेखया परीक्ष्यते । ८ नौरिव । ९ यस्तु शत्रून् प्रति पुरो याति तस्य भावस्तत्ता ताम् ।

॥

तृष्णाहरणनिष्णाता छेका प्रोत्साहने मम । वीरपत्नीव्रतं तीव्रं प्रादुर्भावय गेहिनि ! ॥ २१ ॥

पुरः श्रीवीरनाथस्य दीक्षामादाय सादरम् । चतुर्थपुरुषार्थश्रीसाम्राज्यं साधये यथा (विशेषकम्) ॥ २२ ॥

जगाद गद्गदं भद्राऽऽथाश्रुमिश्रविलोचना । हृदयालुर्दयालुस्त्वमदयालुरिवाऽभवः ॥ २३ ॥

एकपत्नीव्रतरतेः सत्यं भावयतस्तव । व्रतं वेश्मनि वा वासः पुण्यायैव प्रकल्पते ॥ २४ ॥

एकपुत्राऽहमबला बालश्च तव नन्दनः । तेन केन बलेनावां निर्दाक्षिण्य ! विमोक्ष्यसि ॥ २५ ॥

[1]प्रेमहेलाम[2]हेलां मां महिलामवमन्यसे । बालं लक्ष्मीलताऽऽवालं नाऽलं मोक्तुं भवानपि ॥ २६ ॥

पद्मिनीं पदयोर्लग्नां पुन्नागः प्रसभं क्षिपेत् । विमुञ्चत्यङ्गजं [3]पद्मं कथं [4]गम्भीरवेद्यपि ॥ २७ ॥

[5]बालेन मृदुनैकेन स्नेहार्हेण सुतेजसा । वशाम्यपि श्रियं व्याला[6]मालानयासि धिक्कथम् ॥ २८ ॥

स्तम्भः सौधं न तु स्थूणा यूथं हस्ती न हस्तिनी । दुरालानं लता नैव रथमुक्षा न गौर्यथा ॥ २९ ॥

---

१ प्रेमविलासाम् । २ अवज्ञारहिताम् । ३ विन्दुजालं पुनः पद्मम् । ४ "त्वग्भेदाच्छोणितश्रावादामांसव्यथनादपि । संज्ञां न लभते यस्तु गजो गम्भीरवेदसौ" ॥ १ ॥ ५ पक्षे केशेन । ६ आलानं गजबन्धनम् ।

एवमुच्चैः कुलाभारं सात्विकः पुरुषोऽर्हति । अबला नामधामभ्यां न नारी कोविदाऽप्यहो (युग्मम्)॥
सार्थवाहस्ततः प्राह प्रवीणे! विधुराऽसि किम् । त्व बालशारदेवासि जिनतत्त्वविशारदे! ॥३१॥
अन्तरङ्गं बलं पुण्यं भावानामुद्भवान्तयोः । बहिरङ्गाः कुरङ्गाक्षि! पुरुषोपक्रमक्रमाः ॥ ३२ ॥
धर्मो निरवकाशोऽयं सावकाशः सदाऽन्तकः । बलाबलं स्वयं तेषु विचारय सुलक्षणे! ॥ ३३ ॥
सिंहार्कनृपदेवेषु बाल इत्यवहीलना । गूढप्रौढप्रतापेषु* विदुषां नहि युज्यते ॥ ३४ ॥
दिव्यवाण्येकनिर्देशा सिंही चैकसुता यथा । एकाक्षरा महाविद्या रुद्राक्षैकमुखी शुभा ॥ ३५ ॥
तथा त्वमेकपुत्राऽपि प्रभावाद्भुतवैभवा । संसारकार्यवद्धर्मकार्येष्वपि समृद्धिदा (युग्मम्) ॥३६॥
या स्वामिनमतिक्रम्य दिगन्तमपि गच्छति । कालरूपा च सा देहच्छाया नैति सतीतुलाम् ॥ ३७ ॥
त्वं तु च्छायाद्रुमच्छाया मानौन्नत्यनिदर्शनम् । राजमित्राभियोगेऽपि नातिक्रामसि मां पतिम् ॥३८॥
मदङ्गजगुणग्रामोपबृंहणपरायणा । तिष्ठ प्रतिष्ठिता पश्चात्कीर्त्तिमूर्त्तेव निर्मला ॥ ३९ ॥

* –प्रभावेषु इति पाठान्तरम् ।

स्निग्धेन मोदके[1]नाढ्यरसेन प्रौढिशालिना । वचसा रुद्धकण्ठेव योषा जोषं[2]मियेष सा ॥४०॥
प्रेरिता सार्थवाहेन पवनेनेव सा भृशम् । साश्रुधाराऽभ्रलेखेव सुतसौधा[3]द्रिमाद्रवत् ॥ ४१ ॥
क्षीरोदसङ्गतां गङ्गामिवालोक्य स मातरम् । पित्रा समं समायान्तीमभ्युत्तस्थौ स्थितिं विदन् ॥
प्राज्यैर्दन्तांशुभिर्दुग्धैर्गोरसैर्मधुभिस्ततः । गन्धोदकैश्च विनयैश्चक्षत्पञ्चामृतैरिव ॥ ४३ ॥
स्नपयित्वा पदाम्भोजे पित्रोः सिंहासनस्थयोः । स ननाम महान्तो हि जातु मुञ्चन्ति नौचितीम् (युग्मम्)
भोगीन्द्रं विबुधेन्द्रं च नृचक्रे चक्रिणं पिता । प्राह त्रिभुवनीसारं* सुतमुत्सङ्गसङ्गिनम् ॥४५॥
रूपश्री[4]वत्स ! हे वत्स ! च्छेका[5]नुत्सेक वत्सल ! । अनुत्सुकमहोत्साह ! विचारय वचो मम ॥ ४६ ॥
सुधोज्ज्वलस्त्वया प्रांशुः प्रासाद इव मेऽन्वयः । कल्याणकलशेनालं चक्रेऽभ्युदयशालिना ॥ ४७ ॥
त्रैलोक्यसुन्दरं नाम्ना प्रासादं नृभवं[6] निजम् । बाल्ययौवनवार्द्धक्यत्रिभूमं† श्रीनिबन्धनम् ॥४८॥

---

१ आह्लादकेन, पक्षे लड्डुकेन । २ मौनम् । ३ पुत्रगृहम् । ४ नारायण । ५ छेका विद्वांसः । ६ मनुष्यम् ।
* त्रिजगतीसारमिति च पाठः । † –वृद्धत्वत्रिभूममिति पाठान्तरम् ।

दानशीलतपोभावचतुःशालेन शालितम्। संयमस्वर्णकुम्भेन साहाय्यात् तव योजये (युग्मम्)॥
त्वदधिष्ठिततन्त्रस्य[1] ममावापविधायिनः । अभ्यस्तसमितेः[2] स्वापा[3] भावारिविजिगीषुता ॥ ५० ॥
तदादत्स्व कुलाभारं मम धीरधुरन्धर ! । त्वन्मात्रा[4] ज्ञास्यते मात्रा माऽत्राऽऽयासीत्तव श्रमः ॥५१॥
अस्याः कुटुम्बकं चिन्तानदीं मद्बुद्धिवेडया । उत्तीर्णमिति याचेऽहमातरं[5] तव मातरम् ॥ ५२ ॥
श्रीशालिरालपत् ज्ञातब्रह्मणस्ते सरस्वती । सातार्णवे निधित्सुर्मे❀ चिन्तासंवर्त्तकं[6] पितः ! ॥५३॥
स्वसामर्थ्यादलं मातः ! तातः शैलेशतोलने । मयि क्षिपति पोते[7] तु कुलाचलभरं कथम् ॥ ५४ ॥
पित्रोर्यत्र न शुश्रूषा सदोदरपिशाचता । धर्मनाशं गृहावासं पशुधर्ममुशन्ति[8] तम् ॥ ५५ ॥
संसारजालमाच्छिद्य स्वयं रोहित[9]मत्स्यवत् । पितः ! प्रयासि हित्वाऽस्मान् कान्दिशीकान्[10]इहैव किम्?॥

१ तन्त्रं कुटुम्बकृत्यम् । "तन्त्रं स्वराष्ट्रचिन्ता स्यात् आवापस्त्वरिचिन्तनम्"। २ अभ्यस्त रणः । ३ सुखेन आप्यते स्वापा । ४ त्वन्मात्रा मात्रा ज्ञास्यते अत्र तव श्रमः मा आयासीत् इत्यन्वयः । ५ आतरं नौभाटकम् । ६ संवर्त्तकं वडवानलम् । ७ पोतः शिशुः । पक्षे पोतो जलयानम् । ८ वदन्ति । ९ मत्स्यराजस्तु रोहितः । १० कान्दिशीको भयद्रुतः । ❀ निधत्ते मे इत्यपि पाठः ।

साध्यसिद्धौ पिताऽवादीद्वादीवोत्तरमुत्तरम् । वितण्डाताण्डवं त्यक्त्वा प्रामाणिकशिरोमणिः ॥५७॥
जनकं स्वं कैलावन्तं बुधः सान्निहितः सुतः । त्रायते वत्स ! नो सूरमपि मन्दस्तमोग्रहात् ॥५८॥
प्रदीपनेऽत्र संसारे पतन्त्येके हया इव । त्रस्यन्ति पुरुषव्याघ्रास्तस्मात्तेनायमुद्यमः ॥ ५९ ॥
शृङ्गारपर[2]भागाय तवैवायमुपक्रमः । पितृणां स्वर्गभोगाङ्गैर्मै[3]हीयन्ते यतः सुताः ॥ ६० ॥
भद्रे ! त्वमपि सद्बुद्धिर्मनसोऽपि परा मम । [4]प्रीणीयाः सुतमात्मानं* विशुद्धाध्यवसायिनी ॥६१॥
द्वात्रिंशता [5]स्नुषाभिस्त्वं ताराभिरिव रेवती । धि[6]ष्ण्यं श्रिता सुते भूयाः कार्याणां सिद्धियोगकृत् ॥६२॥
एवं विनीय निर्णीय शालिमालिङ्ग्य साञ्जसम् । अभ्यषिञ्चदिवामन्दानन्दनीरैर्निजे पदे ॥६३॥
अष्टाह्निकामथाह्नार्य विधाय जिनवेश्मसु । पात्रदानैर्दयादानैराराधितविधिक्रमः ॥ ६४ ॥
कृतनिष्क्रमणोत्साहः सार्थवाहः स्वसूनुना । श्रीवीरप्रभुहस्तेन व्रतमादत्त सत्तमः (युग्मम्) ॥६५॥

---

१ चन्द्रमसम् । २ परभागो गुणोत्कर्षः । ३ गौरवं प्राप्नुवन्ति । ४ सन्तोषयेः । ५ वधूभिः । ६ धिष्ण्यं सौधम्, पक्षे शुक्रम् । ७ अत्यर्थम् । ८ झटिति । * -मात्मीयमिति पाठान्तरम् ।

प्राप्य व्याजं विना मूलद्रव्यं पञ्चमहाव्रतीम् । यापयन् शकटं देहमक्षोपाङ्गस्य मात्रया ॥६६॥
नयन्नवनवान्[1] देशानाथव्ययविवेचकः । निश्चयव्यवहाराख्यवृषपोषविशेषवित् ॥ ६७ ॥
बोधयित्वेन्द्रियग्रामं युक्त्या पञ्चकुलं किल । सुप्तानेव विमुच्याऽथ कषायप्रतिसारकान्[3] ॥६८॥
द्विचत्वारिंशतं भिक्षादोषान् पथिकसन्निभान् । त्याजं त्याजं चरंश्चर्यां देशकालविभागतः ॥६९॥
उग्रग्रासैषणादोषाहिण्डिपञ्चकुलग्रहे । अप्राप्तोऽथागञ्जितश्च चौरैरिव परीषहैः ॥ ७० ॥
मैषीभेदमकुर्वाणः सार्थवाहमहामुनिः॥ प्रभूतं सारभूतं स पुण्यद्रव्यमुपार्जयत् (षड्भिः कुलकम्)॥
मन्त्रस्येवोत्तरां सेवां विधायानशनक्रियाम् । स्वर्गे सपदि सौधर्मे ऽसौ धर्मेण सुरोऽजनि ॥ ७२ ॥
सचिन्तमग्रजं दानं वीक्ष्य शालेः सुखार्पणे । तपसा तत्पिता प्रैषि किल देवर्द्धिहूतये ॥ ७३ ॥
वृत्ताक्षराभिरामश्री रेजे स्वःश्रीनिमन्त्रणे । विशेषोल्लेखिहल्लेखः स लेखः किल लेखवत् ॥ ७४ ॥
चित्रं गोभद्रगीर्वाणः शाणोत्तीर्णविशुद्धधीः । परपर्श ज्ञानतः पुत्रं पुण्याढ्यपरमावधिम् ॥ ७५ ॥

---

१ इन्द्रियाणि, पक्षे चक्रनिरोधकारिकाष्ठम् । २ परिभ्रमन् । ३ मन्त्रभेदकान् । ४ दानादिचौर्य्यमसत्यं च मषीभेदः । "जेण कयं सामन्नं छम्मासे झाणसंजमरएण । तं मुनिमुदारकित्ति गोभद्दरिसिं नमस्सामि" ॥१॥ ५ तपसा कर्तृभूतेन । ६ विबुधः, पक्षे बाणः । ७ निकषपरीक्षितशुद्धबुद्धिः, पक्षे धीरिषुधिः । ॐ महामतिः ।

लि० दध्यौ सोऽथ पितुः प्रायो विन्ध्यस्येवाङ्गजा गजाः। बलादुन्मूलयन्त्येव सुखसारद्रुमावलीम् ॥७६॥

मुनेरप्यार्द्रकस्येह[1] दोषज्ञस्यापि दुस्त्यजम्। स लावण्यरसस्नेहसंधानं[2] विदधे सुतः ॥ ७७ ॥

१॥ गोत्रोद्धारवराहात्तु[3] महार्घ्यं मौक्तिकं[4] किल। मया सुतनयाल्लेभेऽमुष्मादामुष्मिकं[5] फलम् ॥ ७८ ॥

मया च रणशूरेण शरणं जिनमीयुषा। तदैककः सुतोऽमोचि गृहद्वन्द्वस्य[6] सङ्कटे ॥ ७९ ॥

प्राणप्रियं सुखैर्दिव्यैः पुत्रं नामन्त्रये यदि। कोऽयं सुपर्वतागर्वस्तदा कुक्षिम्भरेर्मम ॥ ८० ॥

सुताचित्तस्य चित्रस्य पटीवाऽतिपटीयसी। भद्रा सद्गुणरङ्गाढ्या सदा सन्निहिताऽस्ति चेत् ॥८१॥

तथापि चिन्तादुःखाग्नेः सन्तापः संभवी पुनः। निजालोकसुधावृष्ट्या तत्तं निर्वापये रयात् (युग्मम्)॥

विचार्येत्यवधीर्य स्वःश्रियं वन्ध्यामिव स्त्रियम्। युक्तं सन्तानशृङ्गारं नन्दनं स ययौ सुरः ॥८३॥

सर्वाङ्गीणाः किरीटाद्या दिव्यालङ्कारमण्डलीः। श्रीशालेर्भाग्यहेलेः[7] किं तरुणाः किरणावलीः ॥

---

१ आर्द्रककुमारस्य, पक्षे आर्द्रकस्यौषधेः। २ संयोगम्। ३ पक्षे पर्वतः। ४ पक्षे मुक्तौ भवं मौक्तिकम्। ५ पारत्रिकम्। ६ द्वन्द्वस्य कलेः, पक्षे युद्धस्य। ७ सूर्यस्य।

देवदूष्याण्यदूष्याणि व्यूतानीन्दोः करैरिव । हरिचन्दनचर्चाश्च मन्दारकुसुमस्रजः ॥ ८५ ॥
सङ्ख्यया च त्रयस्त्रिंशदलङ्कारांश्चतुर्विधान् । त्रायस्त्रिंशैर्भृशं प्रीतैस्त्रिदशैः प्रहितानिव ॥ ८६ ॥
स प्रियाय तनूजाय सप्रियाय ददौ मुदा । सांयात्रिकः समानीतहृद्यश्रीरिव हृद्यकम् (कुलकम्) ॥८७॥
यावज्जीवति तन्माता तावत्कोऽपि सुतार्थकृत् । दयितैव प्रिया तस्य परमार्थान्न नन्दनः ॥ ८८ ॥
विवाह्य बाह्यलोकेषु सुतं शेते सुखं पिता । लोकलज्जैव सज्जैतच्चित्ते स्नेहो न देहजे ॥ ८९ ॥
तातः प्रीतिपरः कोऽपि द्रव्यभागार्पणावधिः । पृथग्भूतं यथा प्राहुस्तद्वत्तुमपि नेष्यते ॥ ९० ॥
विरलः सरलः कोऽपि सुकृती निकृतिं विना । यावज्जीवं सुतार्थानां धर्मवत्पोषकः पिता ॥९१॥
सुद्रव्यस्य सुतस्यार्थे नोद्वहत्यपरां प्रियाम् । अनीतिमिव कोऽप्येकः कन्दर्पाकम्पितः पिता ॥९२॥
सूनवेऽसूनवेक्षेत तृणवज्जनकः परः । तदीयविरहे पृथ्वीनाथो दशरथो यथा ॥ ९३ ॥
श्रीरामं सुगुणारामं देवभूयमितस्तु सः । विधुरेऽपि न सस्मार स्मरापस्मारघस्मरः ॥ ९४ ॥

१ स्वार्थं (कपटं) विना । २ देवत्वं प्राप्तः ।

काश्चिद् घुणाक्षरन्यायात् सुतं स्मरति कर्हिचित् । तद्याचते समृद्धोऽपि बुभुक्षा वप्रविप्रवत् ॥९५॥
देवोऽस्य सविता शस्यश्रीहेतुः कान्तिमान् पुनः । चिन्तासन्तापहन्ताऽभून्मनोवाञ्छितवृष्टिभिः ॥
श्रीशालेमानतुङ्गस्य भोगलक्ष्मीं नृजन्मनाम् । हृदयास्पर्शिनीं मत्वा जनकः किल कौतुकी ॥ ९७ ॥
आनिनाय सुतायात्र समानां त्रिदशश्रियम् । प्रौढां चारित्रमन्त्रेण श्रीणामाकृष्टिविद्यया (युग्मम्) ९८॥
तद्दत्तदिव्यभोगाङ्गैः शालिः कन्दर्पदर्पहृत् । प्रत्यक्ष इव शृङ्गाररसराजो विराजते ॥ ९९ ॥
तत् पिष्टपेषणं चक्रुरथ चर्वितचर्वणम् । देवास्तमेव शृङ्गारं यावज्जीवं वहन्ति यत् ॥ १०० ॥
सुधीर्वक्तेव नव्यार्थं नव्यं काव्यं महाकविः । प्रतिप्रभातमाधत्त स शृङ्गारं नवं नवम् ॥१०१॥
वासांस्यनुपरक्तानि वनमालाममीलिताम् । सुरा नोज्झन्ति ताम्बूलमिव ग्रामेयकाश्चिरम् ॥१०२॥
पार्थिवः सुरपुष्पौघः प्रबुद्धोऽपि सदा चिरम् । तदङ्गसङ्गमं नाप तस्य पुण्यमियत्कुतः ॥ १०३ ॥
देवानामपि साध्येषु पूर्वं व्याप्रियते मनः । तस्यार्थास्तु स्वयं सिद्धास्तेभ्यः पुण्याधिकः स तत् ॥

१ पिता, पक्षे सूर्यः ।

लि० भुवनाधीश्वरा बिभ्रत्यासुरीं भावनां ततः । द्वेधाऽप्यधस्कृतास्तेन नरकप्रातिवेश्मिकाः ॥ १०५ ॥
व्यन्तरैरन्तरं दूरं जन्मान्यत्राप्य पक्षिवत् । भ्राम्यन्ति ये करम्भादिलाभलोलुपचेतसः ॥ १०६ ॥
४ ॥ ज्योतिष्काः सेवकप्राया निश्चितागमनिर्गमाः । बालवृद्धोदयास्तोक्त्या किंच नित्यं विडम्बिताः ॥
अपि वैमानिका देवाः स्वामिसेवकभावतः । परतन्त्रा विषादाद्यैरन्तःशल्यैश्च दुःखिताः ॥१०८॥
कल्पातीता असत्कल्पा अर्हत्कल्याणकेष्वपि । अधिकस्त्वेष देवेभ्यः पुरुषार्थत्रयीमयः (कुलकम्) १०९॥
अदृष्टमश्रुतं पूर्वं परानीतमचिन्तितम् । एकान्तस्वादु संपूर्णमद्वितीयमखण्डितम् ॥११०॥
स्पर्द्धाहीनं च निर्मायमगर्वं नानुतापि च । स्थानादूर्ध्वं स्ववंशोच्चं धनसंभावनाधिकम् ॥१११॥
संतोषपोषकं दानं षोडशांशमदादयम् । तादृगाप सुखं कार्यं निदानानुगुणं यतः (विशेषकम्)॥११२॥
प्रत्यक्षा लक्षणानां ता आयाता देवता इव । मिथुनाहर्विभागस्य द्वात्रिंशद् घटिका इव ॥११३॥
तत्पुण्यस्य विदेहस्य विजया वा समस्थितेः । रसाविर्भावपात्राणि पात्राणि प्रेमनाटके ॥११४॥
विषमायुधयोधस्य भल्लयो गुणवल्लयः । श्रियो देशसहस्राणां भारतानामिवाहृताः ॥११५॥

श्रीसौधर्मविमानीयलक्षाणां सौख्यवर्णिकाः । संपूर्णपुरुषाहारप्रदानस्य फलानि वा ॥११६॥

त्रिलोकीललनालोकललामसुषमाक्षमाः। शशालिरे विशालाक्ष्यः श्रीशालेः पुण्यशालिनः(पञ्चभिः कुल०)



महामुनौ धृतिमती उक्तियुक्ती व वादिनि । बुद्धिसिद्धी इवामात्ये भुक्तिमुक्ती व योगिनि ॥११८॥

पुष्पदन्तप्रभे मेरौ गङ्गासिन्धू महार्णवे । वैताढ्यपर्वते विद्याधरश्रेण्याविवोत्तमे ॥ ११९ ॥

प्रथमप्रावृडम्भोदे विद्युद्वृष्टी महीहिते । मर्त्यामर्त्यश्रियौ विश्वोत्तरेऽत्रैव समीयतुः (विशेषकम्)॥१२०॥

मन्दारमालया मूर्त्तिर्यस्याऽमन्दारमालया । भेजुस्तं ऋतवो भद्रानन्दनं नन्दनं वनम् ॥ १२१ ॥

तत्रानङ्गस्तदङ्गेन विजितो जितकाश्यपि । प्रजिघाय मधुं मित्रं साधुसन्धानसन्धया ॥१२२॥

दिगन्तानपि सौरभ्यकलया लालयत्यलम् । दूरितोद्दामदुर्गन्धमालया मलयानिलः ॥ १२३ ॥

किलासौ हंसचारज्ञः सुरभिर्दक्षिणानिलैः । श्वासैर्नासान्तरन्यासैर्मोनिर्नीर्वशमानयत् ॥१२४॥

वसन्तः श्वसनीसर्पः श्वासैः स्वैर्मलयानिलैः । तदीयश्वाससंपृक्तैः पान्थानुन्मन्थयत्यहो ॥१२५॥

---

१ पुष्पदन्तौ दिवाकरनिशाकरौ । २ संग्रामजयी ।

काचकुम्भं कलाकेलिं किं मधुः काचकारकः । मलयानिलफूत्कारै [1]रसपात्रमसूत्रयत् ॥ १२६ ॥
भुजङ्गान् भापयत्येष बकुलैर्नकुलैरिव । वशीकरोति वश्यैकतिलकैस्तिलकैर्वशाः ॥ १२७ ॥
सीव्यन्ति मनसी यूनोर्येै शूच्या वलितैर्गुणैः। रजः कञ्चुकिता नैव केतकैः केतकैः कृताः॥१२८॥
अकुण्ठः कलकण्ठीनां कलः कलकलः कलाम् । भेजे पुष्पायुधव्याधगोचरीगीतिकागताम् ॥
[2]माकन्दमञ्जरीहस्तैर्नृत्यन्तीव वनावली । भ्रमद्भृङ्गझणत्कारिवियर्वैडूर्यकङ्कणा ॥ १३० ॥
ग्रीष्मे कदम्बसन्दोहा भान्ति पुष्पकदम्बकैः । शालेर्विशाललावण्यालोकैः पुलकिता इव (युग्मम्)॥
चन्द्रकान्तशिलाकान्तचन्द्रशालाविलासिनः । चन्द्रिका चारु चीरस्य चन्द्रचूर्णाञ्चितद्युतेः ॥१३२॥
शालेः सौख्यसुधासिन्धुर्लिल्ये कल्लोललोलताम् । ग्रीष्मः पद्माकराणां हि भीष्मस्तुच्छरसश्रियाम् (यु०)॥
जीमूता विद्युदुद्योतैर्जगदालोक्य, गर्जितैः । घोषयन्तीव भूपीठे न शालेः सुन्दरः परः ॥१३४॥
प्रभवन्ति गिरीन्द्रात्तु* सरितः कूलमुद्रजाः । काष्ठाकूलंकषा भद्रानन्दनादिव कीर्त्तयः॥ १३५॥

१ पारदपात्रम् । २ आम्रवृक्षः । * -श इति पाठान्तरम् ।

सौधस्याभ्रंलिहे शृङ्गे जलकान्तिमणीमये । सदा कृष्णागरुक्षोदधूमनीलनभःप्रभे ॥ १३६ ॥
असौ सौदामिनीभाभिर्वल्लभाभिः पुरस्कृतः। घनाघन इवोदारः सदाऽऽसेचनकोऽजनि (युग्मम्) ॥
सितच्छदच्छदापातैः पुङ्खसूत्कारसूचनैः । मेनेऽसौ स्मरवीरस्य शरदं शरदण्डवत् ॥ १३८ ॥
अविश्रान्ताऽथ विश्रान्ता वृष्टिसृष्टिः पयोमुचाम्। गोभद्रस्य न दिव्यश्रीदानध्यानरतिर्मतिः ॥१३९॥
निशाऽऽसीद्दिनदेशीया हिमांशोर्महसां भरैः । नरलक्ष्मीरिव स्वर्गकल्पाऽस्य सुकृतोदयैः ॥१४०॥
रोजसु द्वादशस्वेष जिगीषुः शारदः शशी । गृहिव्रतेषु सर्वेषु श्रीशालेर्दानधर्मवत् ॥१४१॥
रविर्नव इवाभाति जलदावरणात्ययात् । प्राग्जन्मनैःस्वनिर्णाशात्तस्येव सुकृतोदयः ॥ १४२ ॥
मारुतैर्मालतीगन्धस्तायते भुवनान्तरे । बन्दिवृन्दैरिवामुष्य यशः प्रसरसौरभम् ॥ १४३ ॥
परं प्रसादमासेदुः पयांसि शरदागमात् । सज्जनानां मनांसीव शालिलीलाविलोकनात् ॥१४४॥
हेमन्ते हिमसम्पातैर्जिह्मश्री रविरप्यभूत् । नाप क्वापि पुनर्मान्द्यं श्रीशालेर्भाग्यभास्करः ॥१४५॥

---

१ तदाऽऽसेचनकं, यस्य दर्शनाद् दृङ् न तृप्यति । २ पक्षे चन्द्रेषु ।

तदीयकान्तकान्तासु सुरङ्गसरसीष्विव । कुङ्कुमस्तबका रेजू रक्तप्रालेयपिण्डवत् ॥ १४६ ॥
ततः प्रववृते प्राज्याशिशिरः शिशिरः शनैः । कमलानां शिरःशूलं सौख्यमूलं विलासिनाम् ॥१४७॥
विषीदत्यथ पुष्पौघे चिरं मरुबके यथा । रुचिर्मरुबके चारु विचचार विचारिणाम् ॥ १४८ ॥
राशेर्घन*प्रसूनानां मथने शिशिरे किल । सुमनःसु श्रियं प्राप कुन्द एव मुकुन्दवत् ॥१४९ ॥
शिवप्रियाद्दमनकादवाप शिशिरः श्रियम् । दमयन्तीं सुतां भीमभूपो वाचंयमादिव ॥ १५० ॥
अयं माघविचारेऽपि कथं जाड्येन ताड्यते । विबुधोऽन्ते गुरुर्यस्य दुःसाधार्थप्रसाधकः ॥१५१॥
शिशिरः किं करोत्वस्य द्वात्रिंशद्यस्य वल्लभाः । हसन्त्यः सन्ति जाज्वल्यमाना वसुभरोङ्कुराः ॥१५२॥
गुणा इव महीशस्य भाषाभेदाः कवेरिव । वादीन्द्रस्येव षट् तर्काः प्रबलाग्ने रसा इव ॥१५३॥
गृहाद्या इव लग्नस्य व्रतानीव महामुनेः । सर्वेऽस्य ऋतवोऽभूवन् पुण्याढ्यस्य सुखावहाः (युग्मम्) १५४

---

१ यथा मरौ बकः सीदति । २ पक्षे जलानां राशेः समुद्रस्य । सुमनःसु कुसुमेषु, पक्षे देवेषु । ३ गृह, होरा, द्रेक्काण, नवांश, द्वादशांश, त्रिंशांशाः । * वनप्रसूनानामिति पाठान्तरम् ।

रत्नालोककले विमानविमले प्रासादशृङ्गाङ्गणे
प्रत्यक्षामरसुन्दरीभिरभितः कान्ताभिरभ्यन्वितः ।
रम्भाऽऽरम्भितनाटकैः प्रकटितं श्रीवासवाध्यासितं
सान्द्रानन्दमविन्दताद्भुततमं श्रीशालिदेवः सदा ॥ १५५ ॥

तोयान्तःप्रतिबिम्बितेन्दुतरलं सौख्यं हि मानुष्यकं
हृल्लेखैः कलुषं च लेखसुखमप्यालेख्यसख्योन्मुखम् ।
चिन्तासन्तातितन्तुजालकलनाऽतीतं नितान्तं निरा-
तङ्कं सत्यतया विशालममलं श्रीशालिहेलासुखम् ॥ १५६ ॥

श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नाधिया शुद्धे तृतीयः प्रक्रमोऽभवत् ॥ १५७ ॥

**इति श्रीशालिभद्रचरिते गोभद्रागमनऋतुषट्कवर्णनो नाम तृतीयः प्रक्रमः ॥**



अथ श्रीशालिभोगानां राजवैद्यविचारतः । रसवीर्यविपाकश्रीर्निष्प्रपञ्चं प्रपञ्च्यते[1] ॥ १ ॥
तदा तदेव भूपीठे राजते राजतेजसा । नगरं नगरङ्कत्वदायि[2] देवगृहोन्नतेः ॥ २ ॥
त्रिवर्गवर्गणा[3]प्रायनरवर्गस्य यस्य च । श्रीवीरः प्रददौ मर्त्यभवस्येवाग्रभूमिताम् ॥ ३ ॥
तदा च सर्वदेशेभ्यो रत्नान्यखिलवस्तुषु । ऐयरुर्नररत्नानामकुण्ठोत्कण्ठया किल ॥ ४ ॥
देशान्तरादथाजग्मुस्तत्र वाणिज्यकारकाः । सुकुले पुण्यपण्याढ्या जीवा इव भवान्तरात् ॥५॥
लोभाद् दुर्लभलाभस्य विघ्नराजमिवाथ ते । श्रीश्रेणिकमहाराजं प्रागेवाययुरुत्सुकाः ॥ ६ ॥
भूपतिः प्राह तान् भद्राः ! यूयं कौतस्कुता[4] इह । अनायत्ताः समायाताकाणक्रीतक्रयाणकाः[5] ॥७॥
तेऽप्यूचुर्व्यवहारेण हारेणैव महाशयाः । प्रसाधयन्ति कमलां विमलां व्यवसायिनः ॥ ८ ॥
सम्राट् देशेषु भूपाल! नेपालो यत्र भूभुजाम् । शिरःसु बलधूलीव गन्धधूल्याधिरोहति ॥ ९ ॥

---

१ विस्तार्यते । २ नगः पर्वतः । ३ उपार्जना । ४ कुतः कुतो भवाः । ५ अकाणक्रीतक्रयाणकाः, दानचौर्यरहितपण्याः ।

ालि०

६१ ॥

यस्य स्फारैः स्फुरद्दंतकम्बलैश्च® बलैरिव । आकम्पः सप्रतापानां† भूपानामपि जायते ॥१०॥
वयं ततः समायाता रत्नकम्बलशम्बलाः । तत्त्वां मिलन्तु‡ रत्नानि नयरत्नाकरं विभो ! § ॥११॥
हेमन्ते ये धृतोष्माणः सम्पाते विपदामिव । भीष्मग्रीष्मे सुशीताश्च सम्पदामिव सङ्गमे ॥१२॥
शिरीषसुकुमाराश्च निर्विकाराश्च सर्वदा । अत्यन्तविपुलाश्चित्तचारा इव महात्मनाम् ॥ १३ ॥
महामूल्यांस्ततो रत्नकम्बलान् भूधनाय× ते । अदीदृशन् प्रबुद्धाय स्वग्रन्थान् कवयो यथा (विशेषकम्)॥
ऊर्णायुवर्णिकां तूर्णं निर्वर्ण्येह नयार्णवः । दक्षाः ! साक्षात्परीक्षाऽपि काऽप्येतेषु निरीक्ष्यते ॥१५॥
तेऽप्यूचुर्माघयामिन्यां घृतकुम्भो विलीयते । अमुनाऽऽलिङ्गितो लोहः स्त्रीरत्नेनेव पुत्रकः ॥१६॥
स्त्यायत्याज्यघटो भीष्मे ग्रीष्मे मध्यंदिनातपे । अमुष्माद् युक्तिविन्यस्तात् सिद्धकल्काद्यथा रसः ॥
ऊर्णेयं पुण्यपूर्णानां भोगाऽऽभोगाय जायते । भ्रूमध्यावर्त्तमध्यस्थमूर्णारोमेव लक्षणम् ॥ १८ ॥

---

१ कल्कोऽघविष्टयोः; दम्भे पापिनि किट्टे च । ® कम्बलैः स्वबलैरिवेति पाठोऽपि । † स प्रतीपानामित्यपि पाठः । ‡ त्वां संङ्गच्छन्तु रत्नानि इति पाठान्तरम् । § प्रभो ! इति च पाठः । × भूधवायेति च पाठभेदः ।

६

किंमूल्या इति राज्ञोक्ते जगुस्ते जगतीपते ! । अमीषां स्वर्णलक्षेण क्षुल्लं मूल्यं प्रचक्षते ॥१९॥
इति तेषां वचः श्रुत्वा राजा विस्मितमानसः । वाणिज्यकारकान् प्राह श्रूयतां मे विचारणा ॥२०॥
गजाश्वनररत्नानां द्रव्यलक्षेण संग्रहः । संग्रामे विजयं धत्ते कम्बलं किं बलं पुनः ? ॥ २१ ॥
मार्गणेषु द्विधा राज्ञां युज्यते लक्षयोजना । वस्त्रादिषु तु शृङ्गारहारिणां व्यवहारिणाम् ॥२२॥
गलकम्बलवद्रत्नकम्बलस्यार्थहीनताम् । कुर्वतीत्थं नृपगवी वर्णवित्ता यदृच्छया ॥ २३ ॥
चरन्ती चरणाक्षेपैर्ममर्द व्यवहारिणाम् । आशावल्लीं सुविस्तीर्णामपि स्थानकरोपिताम् (युग्मम्) ॥
आदानमुक्तिविच्छाया दानमुक्तिप्रमोदिनः । वाणिज्यकारकास्तेऽपि शालिभद्रालयं ययुः ॥२५॥
सार्थवाही महीकामाऽनड्वाही निजगोरसैः । तापं निर्वापयामास निर्व्याजं वणिजामथ ॥२६॥

---

१ क्षुल्लमल्पम् । २ "लक्षेणासमविक्रमः स करटी कश्चित् समासाद्यते, येनालङ्क्रियते स्वराज्यमखिलं द्वारि स्थितेनाप्यलम् ॥ युद्धे वैरिबलं विजित्य निखिलं लक्षाण्यनेकान्यपि, प्राप्यन्ते तदमीभिरत्र किमहो ! कर्तव्यमूर्णांशुकैः" ॥२॥
३ अक्षरप्रसिद्धा; पक्षे वर्णधना ।

रत्नकम्बलसंपत्तिप्रश्ने प्रस्ताविते तया । तेऽचीकथन्नथ पृथुं पृथिवीनाथसङ्कथाम् ॥ २७ ॥
भद्राऽऽह मम हे भद्राः! मनसो रत्नकम्बलैः । भवेद् द्वात्रिंशता तृप्तिर्नरस्य कवलैरिव ॥ २८ ॥
अष्टौ स्थानानि वर्णानामिवाष्टौ मङ्गलानि च*। अस्माकमासते रत्नकम्बलानीति तेऽभ्यधुः ॥२९॥
वीर[1]क्रयेण च क्रीत्वा तानष्टौ वीरसूरसौ । प्रियाणां दानवीरस्य क्रमसंमार्जनान्यधात् ॥ ३० ॥
किल केवलसुस्पर्शाः पञ्चाङ्गविषयोत्तरैः । शालेरधःकृता युक्तं स्त्रीरत्नै रत्नकम्बलाः ॥ ३१ ॥
पूर्णमूर्णायुवर्गेण शीतभीतार्त्तिरक्षणैः । कृत्वा च धौतिकारूपं देवार्चासु [2]यदर्जितम् ॥ ३२ ॥
तेनागण्येन पुण्येन स्वजातौ प्राप्य रत्नताम् । कम्बलाः शालिकान्तानामंह्रिसेवामिवासदन् (युग्मम्)
इमे वि[3]लोमाः कामस्य स्कन्धारूढाः क्षमाभृताम् । भूपीठेऽलोठयंस्तेन कामिन्यो रत्नकम्बलान् ॥
जनीजनाय सा [4]स्थूललक्षा लक्षं व्ययेऽक्षिपत् । आददे स्वेन वात्सल्ये कोटिं श्वश्रूषु विश्रुताम् ॥३५॥

---

१ वीरक्रयेण यथाकथितमूल्येन । २ यत्पुण्यमर्जितम् । ३ लोमरहिताः; पक्षे प्रतिकूलाः । ४ उदारा ।
* वेति पाठान्तरम् ।

प्रायः प्रावृट् चिरण्टीवानागतेष्टाऽऽगतां पुनः। प्रजेव शपति श्वश्रून्यूनां मात्राधिकां च ताम्॥ ३६।
वधूमाद्रियते काचिदप्रौढामाम्लिकामिव। जिनधर्मोऽनभिज्ञेव विद्वेष्टि महतीं पुनः॥ ३७।
वधूं बालामबालां च काचित्तु बहु मन्यते। श्वश्रूः सर्वास्ववस्थासु चूतस्येव फलावलीम् ॥३८।
सुकलत्रस्य संपत्तिः पुंसां भाग्यनिबन्धनात्। या प्रीतिर्जननीजन्योः सा सौभाग्यस्य मञ्जरी ॥३९।
धर्मसिद्धिः प्रसिद्धिश्च तस्य सिद्धेः समृद्धिदे*। कविता च सुगीतिश्च† तस्याभ्यासवशंवदे ॥४०।
दिव्यमन्त्रमयी सिद्धिस्तस्य बुद्धिश्च निश्चिते। जाह्नवीयमुने मन्ये तस्य सीमासु खेलतः ॥४१।
लोकद्वयहिता माता गृहिणी च मनोमता। यस्या गेहे च तिष्ठेते प्रीतिशीते परस्परम् (विशेषकम्)।
श्वश्रूवध्वौ वात्तपित्तप्रकृती इव के अपि। परस्परविरोधिन्यौ सपत्नीभावमावतुः॥ ४३॥
धूर्तमैत्र्याऽथ केचिच्च स्वार्थसार्थसमर्थने‡। बिभ्रतो निभृतं मन्त्रिपारिग्राहिकाविग्रहम्॥ ४४॥
एकस्वभावसुभगे समप्राधान्यमान्यते। दृष्टी इवावतिष्ठेते सखीसौख्येन § के अपि॥ ४५॥

---

* सिद्धिसमृद्धिदे इति च पाठः। † सुगीतश्च इति पाठान्तरम्। ‡ समर्थनैरित्यपि पाठः। § सखीसौम्येन इति वा पाठः।

योगक्षेमक्षमे मूलस्नपनप्रतिमे इव । जननीनन्दिनीप्रीत्या व्याप्रियेते च केचन ॥ ४६ ॥
भद्रायास्तु स्नुषा एव पुत्रात्पुत्र्याश्च वल्लभाः। जीवितव्याच्च लक्ष्म्याश्च सत्याः शीलकला इव ॥४७॥
इतश्च चेल्लणा देवी दासीविज्ञप्तिकावशात्। रत्नकम्बलवृत्तान्तं श्रुत्वा राज्ञे व्यजिज्ञपत् ॥४८॥
महीं चारयता युक्त्या विचार्य किमु कारणम्। त्वया दण्डभृताऽग्राहि न महीपाल ! कम्बलः ॥४९॥
श्री[1]निकाय्य ! [2]प्रेणाज्योऽपि कम्बलः [3]प्राज्यपाज्यभूः। [4]प्रसह्य मह्यमानाय्य स[5]प्रदर्पं समर्प्यताम्॥५०॥
अथ लक्षव्यये बद्धलक्षः क्षोणिपतिः क्षणात्। [6]भेदकं प्राञ्जलं तत्र प्रैषीत्पुरुषमाशुगम् ॥५१॥
तेनादिश्यन्त वणिजः प्रयत्नाद्रत्नकम्बलान्। मन्त्रानिव सुदुर्लम्भान् राजा प्रत्युत याचते॥५२॥
तैरूचेऽनादृतान् [7]राज्ञा कमलानिव कम्बलान्। स्वीचक्रे हेलया शालिमाता [8]हेलिप्रभेव तान् ॥५३॥
तेनाभ्येत्य नृपायैवं स्वरूपेऽथ निरूपिते। विस्मितः सस्मितश्चेति भूपतिः पर्यभावयत् ॥ ५४ ॥

---

१ हे लक्ष्मीगृह !। २ असंमतोऽपि। ३ बहुमानकारणम्। ४ बलात्कारेण। ५ साहङ्कारम्। ६ वाणिज्यकारके भेदोत्पादकम्। ७ भूपेन; पक्षे चन्द्रमसा। ८ सूर्यप्रभेव।

स्नुहिर्महातरुर्वह्निर्बृहद्भानुर्यथोच्यते । सारतेजोवियोगेऽपि नरदेवास्तथा वयम् ॥ ५५ ॥

पूर्वमेताननादित्सुः कृपणः कलितो जनैः । अहं सांप्रतमेवेच्छुर्व्यञ्जितः स्त्रीजितः पुनः ॥ ५६ ॥

तथापि श्रीमहादेव्याः कर्त्ताऽस्मि मनसः प्रियम् । यदेकस्तम्भसंस्त्याय[1]श्रद्धाऽपूरि पुरा मया ॥५७॥

विमृश्येति प्रतीहारं प्रैषीन्द्रद्रां प्रति प्रभुः । कम्बलाय जलायाब्धितटीमन्दामिवाशुगः ॥ ५८ ॥

तत्रैत्य वेत्री श्रीशालिसवित्रीमित्यभाषत । आदेशो वासवस्येवादेशं दत्ते नृपः शुभे! ॥ ५९ ॥

यथामूल्यममूल्योऽपि रत्नवद्रत्नकम्बलः । दीयतां द[2]यितो ❀देव्या ग्रहशान्तिविधौ बलिः ॥ ६० ॥

प[3]द्मासन्नप्रसन्नास्यमुद्रा भद्रा जगाद तम् । मूल्यं हृत्प्रातिकूल्यं च स्वाम्यादेशे न शस्यते ॥६१॥

किन्तु मन्दतरायातस्त्वं प्राप्तासि† नहि प्रियम् । वाहावृषभवहेव[4]‡स्वर्णपट्टमिव स्फुटम् ॥६२॥

यतस्तानागतानेवौरभ्रानभ्रपुटानिव । दीपालयकृतेऽभैत्सं वधूकार्याय सार्जवा ॥ ६३ ॥

---

१ संस्त्यायस्य धवलगृहस्य । २ अभीष्टम् । ३ महालक्ष्मीः । ४ पाटितवती ।

❀-यदितो-इति पाठान्तरम् । † -तस्तं प्राप्तोऽसि इति च पाठः । ‡ -देय- इत्यपि पाठः ।

प्रत्यक्षो देव एवास्ते सूनुर्मे तस्य वल्लभाः । द्वात्रिंशत् स[1]ह्यशय्यास्था नव्याः काव्यस्तुतिप्रभाः❀॥६४॥
तासां शृङ्गारसाराणां सुकुमारपदस्थितौ । मया न्यस्ता विभागेनालङ्कारा इव कम्बलाः ॥ ६५ ॥
परं परःशताः सन्ति चिरत्ना रत्नकम्बलाः । कार्यक्षमाः क्षमाभर्त्तुर्यदि ते तान्निवेद्यताम् ॥ ६६ ॥
स कीदृगस्यास्तनयः किं रूपास्तस्य ताः प्रियाः । इत्यसौ विस्मितोऽभ्येत्य वेत्री राज्ञे व्यजिज्ञपत् ॥६७॥
हेलायां वणिजस्तस्य वेलायामिव वारिधेः । निमज्जति महेन्द्रोऽपि के स्वल्पे भूभृतः परे ॥ ६८ ॥
यतः श्रीशालिभद्रस्य जननी मन्त्रवित्तमा । [2]प्रत्यङ्गिरामहामन्त्रमण्डलोद्धारकर्मणि ॥ ६९ ॥
मूलमन्त्रपरीवारे स्नुषाः कूटाक्षरप्रभाः । [3]औरभ्रकेतकीपत्रशकलैः [4]समभावयत् (युग्मम्) ॥७०॥
वारयन्तु पुराणास्तु महाग्राहमिवाग्रहम् । देव्या रङ्गतरङ्गिण्या [5]औविका नाविका इव ॥ ७१ ॥
सार्थवाही सार्थवाहीदृशं सदृशमात्मनः । निर्व्याजं व्याजहारेति विज्ञप्ता चेल्लणाऽवदत् ॥ ७२ ॥
अहं साहित्यविद्येव शृङ्गारहृदयंगमा । [6]शिरःशून्यकथारूपैः पुराणैः किं करोमि तैः ? ॥ ७३ ॥

---

१ सह्यो महेन्द्रपर्वतः । २ मन्त्रविशेषः । ३ कम्बलम् । ४ अपूजयत् । ५ कम्बलानि । ६ शिरः शून्यकथा तद्रूपैः; पक्षे कन्थारूपैः । ❀ नव्यकाव्यस्तुतिप्रभा इति पाठान्तरम् ।

एकमात्महितार्थेऽपि त्वया नादायि कम्बलम्। आमुष्मिकं द्विषां भीष्म ! कदर्येणेव शम्बलम् ॥७४॥
क्व जन्तुजातंजीवातुर्जीमूतः क्व महाम्बुधिः । क्व वा मलयशैलेशः क्व च मेरुरगोचरः ॥७५॥
नरजन्मावतारः क्व क्व वासवपदोदयः । सहकारतरुः कुत्र कुत्र जम्बूः सुदर्शनः ॥ ७६ ॥
सर्वाङ्गसुभगाभोगः क्व शालिविभवोद्भवः।क्वाभिमानसुखास्वादः स्वामिंस्ते राज्यविस्तरः(विशेषकम्)७७॥
यासां प्रमाणे पुण्यस्य याति ब्रह्माऽपि जिह्मताम्। तस्य ता गृहिणीत्वेन प्रमदाः प्रमदास्पदम् ॥७८॥
सौराज्यश्रीस्तव न्यायगम्भीरक्षीरनीरधेः । आविष्कृताऽनन्तभोगभाजा श्रीपातिनाऽमुना ॥ ७९ ॥
प्रेमवेमबलेनेति देवीवाक्चातुरी तुरी । उवाय तद्गुणै राज्ञि चित्रं पटमिवोज्ज्वलम् ॥ ८० ॥
मिष्टं वैद्योपादिष्टं च मन्वानः कौतुकोत्सुकः । भूपादेशात् प्रतीहारः शालिशालां पुनर्ययौ॥ ८१ ॥
तेनाथ वेत्रिणा नेत्रपात्रीकर्तुं निमन्त्रिते। पुत्रे भूपं सवित्री साऽभ्येत्य सत्यमदोऽवदत् ॥ ८२ ॥
दिवो नहि बहिर्मूलवैक्रियं क्रमते वपुः । यथा स्वर्गसदां तीर्थकरकल्याणकेष्वपि ॥ ८३ ॥

१ समूहः । २ जीवनौषधम् । ३ पक्षे शेषफणाः ।

यथा वा रथयात्रादौ प्रासादान्मूलनायकः । यथाऽर्येदेशान्नियाति धर्मः सर्वहितोऽपि न ॥ ८४ ॥
कुमारः सुकुमाराङ्गस्तुङ्गप्रासादशृङ्गतः।सनीडेऽपि तथाऽऽक्रीडे नहि क्रीडति कर्हिचित् (विशेषकम्)८५॥
सुधोज्ज्वलं श्रियां हेतुं तन्महामहिमोदयम्। प्रासादं च प्रसादं च स्वयं स्वामिन्नलङ्कुरु॥ ८६ ॥
क्षणं क्षमस्व क्षोणीश! गृहक्षणमिव स्वकम्। क्षणावतारादक्षूणं मङ्क्षु काङ्क्षामि वर्त्म यत् ॥८७॥
इत्युदीर्योर्जितं भद्रा गोभद्रेण सुपर्वणा । हरिश्चन्द्रपुरीरम्यां हट्टशोभामचीकरत् ॥ ८८ ॥
हरिचन्दनकाश्मीरच्छटाच्छोटधरा धरा । पद्मरागशिलाशालिसद्यःपद्योद्यमाऽद्युतत् ॥ ८९ ॥
पारिजातकमन्दारप्रसूनगृहकावली । भातीव दिवमुत्पित्सुर्महीन्दोः कीर्त्तिमण्डली ॥ ९० ॥
देवदूष्यवितानानि वितीर्णानि विरेजिरे। एष्यन्त्याः किल नासीरकेतनानि दिवः श्रियः ॥ ९१ ॥
घृताचीमेनकारम्भाः प्रासक्षमन्दारमालिकाः । साक्षात् तत्रस्थिता यन्त्रपुत्रिका इव रेजिरे ॥९२॥
तयाऽट्टशोभयाऽतीत्य पद्ययेव पुराऽर्णवम्। सौधं पोतमिवायासीत् हेलया राजकुञ्जरः ॥ ९३ ॥

१ समीपे। २ आक्रीड उद्यानम्। ३ उत्सवावतारात्। ४ चिन्हानि, ध्वजाः। ※ प्राप्त- इत्यपि पाठः।

पुरतो राजतस्तम्भा महानीलदलावली । राजावर्त्तदला शातकुम्भस्तम्भा च दक्षिणात् ॥ ९४ ॥
उत्तरेण मणिस्तम्भा कुरुविन्दकपल्लवा । पूर्वाप्राक्पश्चिमाम्भोधिप्रहितप्राभृतप्रभा ॥ ९५ ॥
प्रवेशे ददृशे तस्य भूभृता तोरणत्रयी । तत्त्वत्रयीव भव्येन जैनधर्मस्य भास्वतः (विशेषकम्)॥९६॥
निशि शीतांशुशीतांशुप्रभवामृतपूरितात् । पञ्चालीकरचन्द्राश्मकरकादाचमन् शुचिः ॥ ९७ ॥
वैडूर्यगोमुखं मुक्तास्वस्तिकं स्फाटिकाङ्गणम् । प्रविवेश विशामीशः कृतकौतुकमङ्गलः (युग्मम्)॥९८॥
पिण्डस्थमिव सौन्दर्यं पदस्थमिव वैभवम् । कौतुकं किल रूपस्थं रूपातीतं दिवोऽपि हि ॥ ९९ ॥
प्रधानं चतुराधानध्यानसंधानसाधनम् । ज्योतिर्मयं यदाभाति महोदयनिबन्धनम् (युग्मम्)॥१००॥
किमिदं कीदृशं चाग्रे भावीति नृपतेर्मतिः । बाढं मूढा नवोढेव तत्राभूत् प्रौढनायके ॥१०१॥
क्वापि खस्फटिकाबद्धमध्यसिद्धजलभ्रमा । परितो नीलरत्नालीकूलकन्दलिकालिमा ॥१०२॥
दूरं दूरान्तरस्थाऽपि जगज्जीवैनधर्मतः । यद्भूर्वेदोक्तहिंसेव विदग्धानपि वञ्चयेत् (युग्मम्) ॥१०३॥

---

१ मण्डलम् । २ चतुष्प्रकारं प्रधानं ध्यानसाधनहेतुः । ३ पक्षे करणम् । ४ गङ्गाजलभ्रमा । ५ अङ्कुरस्य ।
६ वोग्रस्वभावतः, पक्षेऽहिंसामूलधर्मतः ।

शातकुम्भस्तम्भशोभं वर्यवज्राङ्कभित्तिवत् । दिव्योल्लोचं देवपुष्पैः कृतपुष्पगृहावलि ॥ १०४॥
तमसा न समाक्रान्तं घण्टाकारेन्दुसूर्यवत् । महीयोमहसां गेहं यन्महेन्द्रविमानवत् ॥ १०५॥
किं हेमाचलमारोहाम्याहोस्विदास्मि रोहणम् । नन्दनं वा वनं यामि त्रिदिवं वा विशाम्यहम् १०६॥
एवं विकल्पसंकल्पकल्पनाऽनल्पतल्पगः । मध्यमध्यास्त सौधस्य तस्यासौ वसुधाधवः (चतुर्भिःकला०)॥
उत्कण्ठां विस्मयं भ्रान्तिं निश्चयं प्रमदं मदम् । निर्वेदं नृपतिर्विन्दन् भावसंकरमाप सः॥ ॥१०८॥
अतीत्य भूमिं त्रितयीं पुरुषार्थत्रयीमिव । भुवं चतुर्थीं मोक्षार्थप्रवृत्तिमिव संश्रितः ॥१०९॥
मैत्रीप्रमोदकारुण्यमाध्यस्थानां समुच्चयम् । चतुष्कावसरं राजा योगीवाङ्गीचकार सः (युग्मम्) ११०
सौवर्णपूर्णकलशे मणीमणिकमण्डिते । नानारत्नलसत्पात्रे महानीलमयूरके ॥ १११ ॥
तत्र मारकताऽमैत्रस्फारोदारयवारके । रत्नसिंहासनं राजा सभायां समभाजयत् (युग्मम्)॥११२॥

---

१ बृहत्तेजवद् गृहम् । २ विकल्पस्य संकल्पस्तस्य कल्पना तद्रूपं यद् अनल्पं तल्पं तद् गतः प्राप्तः । ३ अमत्रं पात्रम् । ४ अभजदित्यर्थः । ॐ—मन्वभूदिति च पाठः । ॰ असभाजयत् इति पाठान्तरम् ।

चित्रा[1]ऽभिसङ्गता सद्यो राजयोगाचिकीरथ । सोमस्य सविधे सूनोर्भद्राऽतिथिरिवाययौ ॥११३॥

तं प्राह सद्गुणश्रेणे ! शृणु श्रेणिकमागतम्। विचक्षण ! क्षणादेत्य दृशा संभावय स्वयम् ॥११४॥

स जगादाथ※ सोद्वेगं वेगादेतत् क्रयाणकम्। परीक्ष्य तोलयित्वा च [2]युक्तमूल्येन गृह्यताम् ॥११५॥

माता रोमाञ्चिता दध्यौ स्त्रीषु धन्याऽहमेकिका । यस्या एवंविधः पश्य लीलागर्भेश्वरः सुतः ॥११६॥

चिन्तयित्वेति साऽवादीदऽना[3]दीनवमात्मजम्। भूचक्रेऽयं ननु स्वामी न क्रेयं वस्तु किंचन ॥११७॥

ज्योत्स्नयेव दिनेशस्य करस्थसरसीरुहम् । वृष्ट्येव ब्रह्मणो हंसः [4]शृणिशून्येव दिग्गजः ॥११८॥

जन्मनः पूर्वमरपृष्टस्तयाऽसौ स्वामिवार्तया। सर्वतः सुकुमारश्रीर्यतिधर्म इवाव्यथि (युग्मम्) ॥११९॥

श्रुतिः स्वामीति संतापमाततानैकपद्यपि । चित्रं शतपदीवास्य कर्णजाहाऽवगाहिनी ॥१२०॥

दध्यौ धीरः पराक्रान्तो भव एव पराभवः। यन्ममापि समानांह्रिपाणिः प्राणी परः प्रभुः ॥१२१॥

---

१ आश्चर्य्ये। पक्षे चित्रानक्षत्रम्। २ "कृत्वा महर्घं यदि वाऽमहर्घं क्रयाणकं श्रेणिकनामधेयम्। यथायथं मातरिदं गृहाण प्रमाणमम्बैव किमत्र पृच्छा ?"॥१॥ ३ अनादीनवं निर्दोषम्। ४ शृणिरंकुशः। ※—दाम्ब ! इति वा पाठः।

ग्रहेषु द्वादशात्माऽयं सहस्रकरशोभया । शेषराजश्च सर्पेषु सहस्रफणसंख्यया ॥ १२२ ॥
सहस्राक्षतया स्वर्गिवर्गे च किल वासवः। [1]राजायतां नितान्तेन विशेषावयवाधिकः(युग्मम्) ॥ १२३॥
संसारसरसीवारि*बुद्बुदाकारधारिणः । बुधैरस्य कथंकारं पार्थिवत्वं समर्थ्यते ? ॥ १२४ ॥
परायत्तपरीभोगां [2]चञ्चलां चञ्चलस्थितिम्। वारवेश्याङ्गनादेश्यां धिगिमामसतीं श्रियम् ॥ १२५॥
परकाव्यैः कवित्वं यद् गर्वो याचितभूषणैः । या च याचनया तृप्तिस्तदेतन्मूर्खलक्षणम् ॥ १२६॥
सति त्रिभुवनीनाथे श्रीवीरे स्वपदप्रदे । [3]चतुरङ्गनृपेणेव किमनेन [4]शिखण्डिना ? ॥ १२७॥
पुण्याधिक्येन चेन्नाथः, पुण्ये साध्ये स्वयं पुनः। अन्योऽपि हि मम स्वामी जीवन्निति सहेत कः? ॥
भोज्यैरिव पराधीनैस्ताम्बूलैरपरार्पितैः । पुष्पैर्वा देवनिर्माल्यैरेभिर्भोगैरलं मम ॥ १२९ ॥
[5]कलिङ्गेशस्य वैराग्यं किं पङ्गुवृषभाश्रितम् † । राजकुञ्जरमारूढं शालेः सन्नद्धयोधवत् ॥ १३० ॥

---

१ राजत्वमाचर । २ "चञ्चला चपलाऽशनिः"। ३ द्यूतभूपेन। ४ नपुंसकेन ५ "श्वेतं सुजातं सुविभक्तशृङ्गं, गोष्ठाङ्गणे वीक्ष्य वृषं जरार्तम् । ऋद्धिं त्वऋद्धिं प्रसमीक्ष्य बोधात् कलिङ्गराजर्षिरवाप धर्मम्" ॥१॥ * -सरसीसारीति पाठान्तरम् । सरसीतारीत्यपि पाठः । † -वृषभासितमिति पाठान्तरम् ।

इन्द्रं पतितमालोक्य पाञ्चालेशो व्यरज्यत । अयं तु नृपमुन्निद्रप्रमोदामोदमुच्छ्रितम्* ॥१३१॥

नमेर्वलयमार्गेण वैराग्यं सङ्गतं मितम् । शालिभद्रस्य तु सदा राजमार्गेण सङ्गतम् ॥१३२॥

नग्गतेश्चूतमासाद्य संवेगः कोकिलः किल । मत्तोऽभूद् भूधरं प्राप्य नृसिंहस्यास्य सिंहवत् ॥१३३॥

उपरोधात्परं मातुः स मेने राजदर्शनम् । शुद्धसम्यक्त्वधारीव मिथ्यादर्शनमप्रियम् ॥१३४॥

सप्तमादथ भूभागाद्गीतध्वनिरिव स्वरात् । जगदानन्दकन्दस्तं तूर्णं तूर्यमुपेयिवान् ॥१३५॥

कान्ताभिः परितो विद्याधरीभिरिव राजितम् । राजा स्मरमहादुर्गशालं शालिमलोकयत् ॥१३६॥

रूपश्रीपर्वते तत्र पुण्यज्योतिर्विलोकनात् । राज्ञा कार्पटिकेनेव मेने निर्मलताऽऽत्मनः ॥१३७॥

अथ सान्तःपुरः शालिभद्रः शालिभरादिव । श्रीश्रेणिकक्षितीशाय विनीतो विनतिं व्यधात् ॥

तं घेनं नेत्रविश्रामस्थानमद्भुतमुन्नतम् । आलिङ्ग्य भूभृदुत्सङ्गरङ्गे रङ्गान्न्यवीविशत् ॥१३९॥

---

१ श्रीपर्वते विशाखान्तादिनत्रयेषु ज्योतिः स्वयं यः कार्पटिकः पश्यति स हत्यादिदोषराहितः स्यादित्यर्थः ।

२ घनमत्यर्थम्; पक्षे मेघम् । ३ श्रेणिकः, पक्षे पर्वतः । * प्रमोदामोदमुत्थितामिति पाठान्तरम् ।

परमानन्दमोनन्द तत्संबन्धान्महीधरः । व्यलीयत च तत्तापाद् गलदश्रुजलः परः ॥ १४० ॥
भद्राऽऽह देव ! दिव्यस्रग्वस्त्राहारविलेपनैः । सुहितोऽयं नरश्वासव्यासैॐदोंदूयतेतराम् ॥१४१॥
कुराज्यं जननिश्वासैः परश्वासैर्यथा सुखम् । जीवितं श्वसनीश्वासैरूद्ध्वंश्वासैर्यथा वपुः (युग्मम्)॥४२॥
पिताऽस्य सवधूकस्य देवभूयमितो यतः । दिव्यभोगश्रियं दत्ते कल्पद्रुरिव युग्मिनाम् ॥१४३॥
स्वकरात्तदयं देव ! सदयं राजकुञ्जर ! । मुच्यतां कमलाकेलिपात्रं कमलकोमलः ॥ १४४ ॥
तेन पुण्येन मुक्तोऽगात् स शिवं सप्तमं क्षणम् । कलत्रैः ससुखैः† सिद्धगुणैर्द्वात्रिंशता सह ॥१४५॥
सूनुर्धर्म इव स्वामिन् ! स्वागमेन प्रतिष्ठितः । स्वानुभूतेर्विभूतिं मे विद्यामिव पवित्रय ॥१४६॥
एवमुच्चवचोवीचिपूरैरप्युत्सुकं नृपम् । भद्रा भद्रा नदीवाथ वेगाऽऽवेगादचिस्खलत् ॥१४७॥
लक्षपाकैस्ततस्तैलैः परिणाममनोरमैः । दर्शनानन्दनैः कर्णप्रीणनैर्वचनैरिव ॥ १४८ ॥

१ प्राप । २ तृप्तः । ३ न्यासैर्विस्तरैः । ४ सर्पविशेषः । ५ कमलं हि राजकरेण गजकरेण च पीड्यते । ६ शोभनसिद्धान्तेन; पक्षे निजागमनेन । ७ आवेगः प्रवाहः । चस्खाल । ८ लक्षौषधपाकेन निर्वृत्तैः । ९ आयतिमनोहरैः । ॐ न्यासैरिति च पाठः । † स्वसखैरिति वा पाठः ।

अङ्गमर्दाः क्षमाभर्त्तुरङ्गोपाङ्गविदो व्यधुः । संवाहनां गणस्येव गीतार्थास्तां चतुर्विधाम् (युग्मम्)।

[2]स्नानीयगन्धचूर्णेनापनिन्युस्तैलसंभ्रमम् । प[3]रमार्थोपदेशेन ते पूर्वमिव संस्तवम् ॥ १५० ।

भृङ्गारैर्यमुनागङ्गारूपैर्द्वैधा त्रिधा जलैः । स्नानपीठे माणिस्वर्णमये ते तमसिस्नपन् ॥ १५१ ।

तदाऽभिषुण्वतस्तस्य मुद्रा कूपेऽपतद्भयात् । वनिता दुर्विनीतेव कोपाटोपवशंवदा ॥ १५२ ।

गलितेना[6]ङ्गुलीयेन जाङ्गुलीयपदेन वा । सुवर्णातिशयाढ्येन नरेन्द्रः प्राप जिह्मताम् ॥ १५३ ॥

तपस्विनमिवालोक्य मुद्राभ्रंशादनीदृशम् । विशामीशं, दिदेशाथ दासीं भद्रा विनिद्रधीः ॥१५।

तदाज्ञया तया तोये प्रयोगादपकर्षिते । मुद्रारत्नमयत्नेन भूपः कूपान्तरैक्षत ॥ १५५ ॥

---

१ शरीराङ्गुलिप्रमुखानि तेषां विदो विज्ञाः; अस्थिमांसत्वग्रोमभेदैश्चतुर्धा । पक्षे अङ्गानि आचाराङ्गादीनि उपाङ्गानि औपपातिकराजप्रश्नीयप्रमुखानि । अशनपानवस्त्रपात्ररूपां निर्वहणाम् । २ स्नानार्हगन्धवासेन स्नेहमुच्छेदयामासुः; तैलत्वान्तिम् । ३ पक्षे सत्योपदेशेन यथा प्रथमं मिथ्यात्वम् । ४ पुष्पोदक–गन्धोदक–शुद्धोदकभेदैः स्नानस्थाने स्नानं कारितवन्तः । ५ स्नानं कुर्वतः । ६ मुद्रया सुवर्णातिशयेनाढ्यया, राजा श्रेणिकः; मूढताम्; पक्षे जाङ्गुलीविद्यया प्रधानाक्षरातिशयेन, गारुडिकः । ७ प्रमादवर्जितबुद्धिः । ८ दृष्टवान् ।

श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नाधिया शुद्धे चतुर्थः प्रक्रमोऽभवत् ॥ १७४ ॥

## ॥ इतिशालिभद्रकथायां श्रीश्रेणिकागमनवर्णनो नाम चतुर्थः प्रक्रमः ॥

शालेः[1] पुण्यकणश्रेणिः किं गणेया[2] कथंचन । इदमीयः[3] परं मानमहिमा परिभाव्यताम् ॥ १ ॥
राजालोकात्[4]किलोद्वेले शालेर्वैराग्यसागरे । मर्त्यामर्त्यश्रियौ गङ्गासिन्धू वैरस्यमीयतुः[5] ॥ २ ॥
महामात्रेण[6] तेनाथ मानोऽयं गन्धसिन्धुरः । वैराग्यरङ्गसिन्दूरपूरैः श्रृङ्गारितो बभौ ॥ ३ ॥
इन्द्रियेन्द्रेण मनसा स विवेकबृहस्पतिः । आलुलोचे चतुष्कर्णं मोहदैत्याभिषेणने[7] ॥ ४ ॥
प्रातर्मङ्गलतूर्याणि पौरैः साधारणान्यहो । प्रसादवित्तकैर्[8] भोज्यं तुरङ्गा मन्दुरानरैः ॥ ५ ॥

१ पक्षे व्रीहिः । २ गणनीया कथनीया । ३ अस्यायमिदमीयः । ४ राजा नृपतिः; पक्षे चन्द्रः । ५ विरसताम् ।
६ मात्रा काष्ठा; पक्षे हास्तिपकेन । ७ सेनया सह वैरिणामभिमुखं गमनं अभिषेणनम् । ८ प्रसादपात्रैः ।

ग्राम्यं पौरेषु सूरेषु भीरुं धनिषु निर्द्धनम् । मूर्खं सुधीषु तन्मेने भूषणेषु गतप्रभम् ॥१५६॥

आसीन्[1]महीधरे लीना या कान्तिजलवाहिनी । सोर्मिका [2]नोर्मिकाष्ठामप्याऽऽपालङ्कारसागरे ॥१५७॥

दासीं प्राह महीपालः किमयं भूषणोच्चयः । साऽवदद्देव ! [3]सद्भूतं श्रूयतां भुवना[4]द्भुतम् ॥१५८॥

देवा दासा द[5]शास्यस्य श्रीरामस्यार्णवः स्थलम् । नलस्येव रविः [6]सूदो याचकः श्रीप[7]तिर्बलेः ॥१५९॥

एवं [8]नृदेवदेवेषु देवे[9]देवेषु दुर्घटम् । कल्याणमपि निर्माल्यमेतन्नेतं[10]र्ममेशितुः (युग्मम्) ॥१६०॥

न [11]मौल्यमपि निर्माल्यं स्वार्गिणां किं पुनर्वसु । विधूय सवधूकेन यदाऽनेन विमुच्यते ॥१६१॥

यदेतत्सवधूकस्य जनकेनोपनीयते । तत् [12]पनीपत्यते कूपेऽपमानादिव भूषणम् (युग्मम्) ॥१६२॥

शालेः परिमलैरेवं राज्ञोऽभू[13]दाशितंभवः । अलमन्येन केनापीति मन्ये स शिरोऽधुनोत् ॥१६३॥

---

१ श्रेणिकें, पक्षे पर्वते । नदी । २ कल्लोलशोभामपि । ३ सत्यम् । ४ जगत्त्रयाश्चर्यकारिणम् । ५ रावणस्य । ६ सूपकारः । ७ विष्णुः । ८ चक्रवर्तिषु । ९ इन्द्रेषु । १० संबोधनम् । ११ स्रगपि । श्रीशालिना । १२ भृशं पतति । १३ तृप्तिः ।

यामिकैः केलविङ्कैश्च प्रासादाः शिखराण्यपि । परं ममेति सत्त्वैव राज्ञामपि सुखावहा ॥ ६ ॥
एवंस्थितेऽपि यद्यन्यस्वामिना श्रीरधिष्ठिता । तदा हगास्ति नीरोगा तारैव पुनरावृता (विशेषकम्)॥
पुष्पमालाः पराघ्राता नार्हन्ति मरुतां यथा । मनस्विनां परायत्ता वित्ता अपि तथा श्रियः॥ ८ ॥
नृसिंहा न समीहन्ते भक्ष्यं कक्षीकृतं परैः। स्वीकुर्वन्ति तु गोष्ठश्वास्तत् कृत्वा विग्रहाग्रहम् ॥९॥
हेमाप्येकाहभुक्तं चेन्निर्माल्यं परिकल्प्यते । ध्रुवं तदीशनिर्माल्यमेवामूर्मम सम्पदः ॥ १० ॥
नाहं तिष्ठापयिष्ये तत् पुण्यकोशं विकाशिधीः । जिगीषुरिव विज्ञातैर्भोगैरुभयचेतनैः ॥११ ॥
यत्रान्तर्भूत्यतादुःखं सुखच्छाया बहिष्पुनः । तैः स्वर्गैरप्यलं ताम्रसुवर्णाभरणप्रभैः ॥ १२ ॥
राजसर्पः प्रसर्पन्तं यकं जेगिल्यतेऽनिशम् । धिगहो भोगिलोकं तं संकर्णत्वनिराकृतम् ॥१३॥

१ प्राहरिकैः । २ चटकैः पक्षिभिः । ३ देवानाम् । ४ विख्याताः । ५ स्वस्थानस्थः परद्वेषी गोष्ठश्वा, गोष्ठश्वोऽदन्तसमासान्तो ज्ञेयः। ग्रामगोष्ठश्वानः । 'गोष्ठश्वोऽप्यापदि स्थितः' । ६ ईशनिर्माल्यम्; पक्षे श्रेणिक० । ७ मम मोहस्यापि मिलनादुभयचेतनैः; पक्षे पुरुषैः । ८ स्वर्गे । ९ अजगरः यमेव सर्पलोकम् । १० कर्णरहितत्वम्, भोगिलोकस्य दृक्कर्णत्वात् । पक्षे भूपमुख्यः, भोगिलोकं विलासिजनं; दक्षत्वनिराकृतम् ।

तं मन्त्रं साधयिष्यामि सेविष्ये देवतां च ताम्। आनन्दो राजमान्येन न बन्दीक्रियते यथा ॥१४॥
तदेवं भवभङ्गाय मानसे सम्प्रधारिते । कल्याणमित्रमभ्येत्याकस्मात्तस्मै व्यजिज्ञपत् ॥ १५ ॥
श्रीधर्मजययात्रायां मूर्त्तं मङ्गलमद्भुतम् । शङ्खघोष इवात्रागाद्धर्मघोषगणेश्वरः ॥ १६ ॥
एकमुन्माथिता॰ कामं केकिकेकायितं परम् । जाते रसवतीपाके प्रियातिथिसमागमः ॥ १७ ॥
ग्रामान्तरं प्रतिष्ठासोः समर्था सार्थसङ्गतिः । प्रौढपोताधिरूढस्य पवनस्यानुकूलता ॥ १८ ॥
यदयं मम धर्मेच्छोर्महेच्छगुरुसङ्गमः । भद्राऽङ्गभूस्तदा भद्राऽङ्गभूरेवमभावयत् (विशेषकम्)॥ १९ ॥
तुरङ्गमविमानेन विमानेनेव रंहसा । विमानेनसमश्रीकः स विमानेन चेतसा ॥ २० ॥
ज्ञानदर्शनचारित्रदुग्धदध्याज्यकाम्यया । धर्मघोषमिवाचार्यं धर्मघोषमुपस्थितः (युग्मम्)॥ २१ ॥

---

१ पक्षे क्षयरोगेण । २ कल्याणकारणभूमिः श्रीशालिः । भद्रा अङ्गानां भूर्यस्य सः । ३ अश्ववाहनेन, विमानेन इव । रंह शब्द. सकारान्तः । विमानस्येन स्वामी इन्द्रस्तस्य समा श्रीर्यस्य । विगतो मानो यस्मात् तेन । ४ वाञ्छया । ५ "घोषस्त्वाभीरपल्ली स्यात्" । समीपे आप । ॐ -मुत्थापितेति च पाठः ।

प्रणम्योपाविशद्दत्त्वा विनया[1]गस्त्यदक्षिणाम् । कल्याणदक्षिणां पुण्यदक्षिणां त्रिः प्रदक्षिणाम् ॥२२॥
[2]सद्धर्मलक्षणाः सूरिः सुधाया इव लक्षणैः[3] । मिथ्या[4]विलक्षणा वाचः प्राह हर्षा[5]विलक्षणाः ॥२३॥

॥ तथाहि ॥

भव्याः! भवाहवे नव्यशीलसन्नाहशालिनः । सदागमशिरस्त्राणाः संयमाश्वसमाश्रिताः ॥२४॥
आदाय दर्शनज्ञानाचारशल्य[6]त्रयं करे । विजयध्वं क्षणान्मोहरागद्वेषद्विषत्त्रयम् (युग्मम्) ॥ २५ ॥
पायं[7] पायं कणे[8]हत्य तदेतद्देशनाऽमृतम् । स पप्रच्छ स्वसन्देहचर्चा[9] मुनिमं[10]चर्चिकाम् ॥ २६ ॥
स्वामिभृत्यप्रवाहोऽयं मानिचित्तसरः पतन् । केन सत्कर्मबन्धेन जगद्बन्धो निवार्य्यते ॥ २७ ॥
चारुज्ञानचतुष्काढ्यः क्षमा[11]क्षामोदरीवरः । प्राह श्रीधर्मसाम्राज्यसाधुराजः स राजवत् ॥ २८ ॥

---

१ विनय एव अगस्त्यस्तस्य निवासाय दक्षिणदिक्समानाम्, कल्याणदात्रीम्। प्रधानाम्। त्रिः प्रदक्षिणाम्। २ सद्धर्मस्य लक्षणं यासु ताः । ३ सदृश्यः । ४ मिथ्यात्ववैरिण्यः । ५ हर्षेणाविलो व्याप्तः क्षणो मुहूर्तो यासु ताः । ६ त्रिशल्यम् । ७ अभीक्ष्णं पूर्वं पानं पायम् २; "ख्णम् चा-" ॥५।४।४८॥ इति ख्णम्, "आत ऐः कृ-" ॥४।३।५३॥ इति ऐः, आयादेशे, द्वित्वे च रूपम् । ८ "कणेमनस्तृप्तौ" ॥३।१।६॥ इति गतिसंज्ञा । तृप्तिपर्यन्तम् । ९ विचारणाम् । १० मुनिप्रधानम् । ११ क्षमा पृथ्वी; पक्षे उपशमः ।

वेशालकमलाकेलिचतुःशालरय शालते । अयमन्तर्मुखः[1] प्रश्नस्तवैवान्तःस्फुरत्तरः ॥ २९ ॥
सङ्गत्याग[2]समुत्तुङ्गकाष्ठासक्तसुधीमृदा । चारित्रसेतुबन्धेन सहसा स निवार्यते ॥ ३० ॥
महास्कन्धाः कदर्थ्यन्ते पुंनागा[3] राजकुञ्जरैः[4] । क्षेमाभृत्सु[5] पुनस्तेषां दन्तभङ्गः प्रसङ्गवान् ॥ ३१ ॥
पृथग्रूपं सुखं दुग्धं राजहंसै[6]र्विविच्यते । जडेभ्यः[7] सुधियस्त्वेकरूपं न प्रशमामृतम् ॥ ३२ ॥
निर्वाप्यन्ते[8] च ताप्यन्ते राजहंसैर्जलाशयाः । समतास्वर्गगङ्गा तु न तेषां करगोचरे[9] ॥ ३३ ॥
तन्मानिजनमाणिक्यकोटिकोटीर[10]हीर ! ये । त्रियोगकरणैः शुद्धा रत्नत्रयपवित्रिताः ॥ ३४ ॥
निर्धूतदोषत्रितया गुप्तित्रिकविभूषिताः । भूर्भुवःस्वस्त्रयीवन्द्यास्ते स्युस्त्रिभुवनेश्वराः ॥ ३५ ॥

---

१ अन्तरङ्गः । २ सङ्गत्याग एव समुत्तुङ्गं महद् यत् काष्ठं तेनासक्ता लग्ना सुधी एव मृत् मृत्तिका; अथ स्वामिभृत्यप्रवाहः । ३ प्रधानपुरुषाः, बलीयांसः । ४ राजमुख्यैः श्रेणिकादिभिः । ५ मुनिषु । पक्षे वृक्षाः प्रधानगजैः पर्वतेषु । ६ नृपैः, पक्षे हंसैः । ७ मूर्खेभ्यः, पक्षे पानीयेभ्यः । ८ वांक् गतिगन्धनयोः, णिगि, पावन्ते च क्यप्रत्यये निर्वाप्यन्ते । तपं, धूप सन्तापे, णिगि वृद्धौ क्यप्रत्यये, ताप्यन्ते । राजा चन्द्रः, हंसः सूर्यः; किरणाः । पक्षे राजमुख्यैः । जडाशया मूर्खाः । श्लेपे डलयोरैक्यम् । ९ हस्तस्य । १० मुकुटस्य ।

ततः प्रमोदमेदस्वी स मनस्वी जगौ गुरुम्। भवं मोक्ष्ये, मनो मोक्षे योक्ष्ये यौष्माकशिक्षया ॥३६॥
मातरं कातरस्वान्तां यावदापृच्छ्य वत्सलाम्। आगच्छामीत्युदीर्यासौ प्रविवेश पुनः पुरम् ॥३७॥
प्रतिमानं विमानस्य स्वप्रासादावतंसकम्। अध्यास्त ध्वस्तसंमोहमन्त्रमण्डपसंनिभम् ॥ ३८ ॥
इतश्च देहः[1] सस्नेहं मनोराजं महौजसम्। पेशलं प्राञ्जलीभूय सुसेवक इवावदत् ॥ ३९ ॥
स्वामिन्नहं स्वभावेन शीतवातातपक्षमम्। राजश्वासानिलैर्दूनं निन्ये भूमिं त्वयेयतीम्[2] ॥ ४० ॥
तदद्य मम गोस्वामी परः[3] स्वामीतिदूनधीः। मोऽहं सर्वाभिसारेणाभिषिषेणयिषुर्यदि[4] ॥ ४१ ॥
तन्ममेदं महापर्व वल्लभं वीरमानिनाम्। प्रभुप्रसादप्रार्णस्य[5] ऋणार्णं शोधयेऽधुना ॥ ४२ ॥
मा ज्ञासीर्वैक्रियं[6] विज्ञ! नैवाहारकमेव माम्। जानीह्यौदरिकं मात्राधिकमत्यर्थकारिणम् ॥ ४३ ॥

१ देहः कर्ता, मनोराजं कर्म। २ चित्तेन। ३ मम परोऽन्यः स्वामीति विषण्णधीः, "···कणगरयणधणपूरयंमि" इत्यादि। ४ सेनया सह वैरिसंमुखं यियासुः सर्वबलेन। ५ प्रभूतप्रार्णस्य। "ऊसंखल थाउं"। ६ विक्रियायां भवं वैक्रियम्।

तदहं [1]सासहिः कष्टं वावहिर्भारमाहितम् । चाचलिस्तव निर्देशैरपकीर्त्तौ न पापतिः ॥ ४४ ॥
[2]भुजिष्यस्ते यतिष्येऽहं सर्वार्थप्राप्तये तथा। लब्धा यथाऽहमिन्द्रत्वं गोस्वामी न व्यथिष्यते (सप्तभिः कु०)
देहवाहमनःसादिसाङ्गत्यमवगत्य तत् । स मेने भवमा[3]श्वीनमद्यश्वीनं जयोत्सवम् ॥ ४६ ॥
[4]उपेयिवांसमप्याशु तं चिरादिव वीक्षितम्। भद्राऽभ्येत्याभ्यधा[5]दायल्लकाम्भस्तल्लिका स्वयम् ॥४७॥
[6]इयतीर्नियतं कालकलाः कस्तात ! लम्भितः । दशां देशो वसन्तश्रीमिश्रोपवनवासिनीम् ॥४८॥
[7]इलातलकलाकेलिकेलिः शालिरथालपत् । मातरद्य मयाऽश्रावि श्रीधर्मः शर्मकारणम् ॥ ४९ ॥
[8]सारस्वतप्रवाहाच्च वहतः परितो गुरोः । उपदेशपयःपूरः प्रागस्थात् कर्णकुण्डयोः ॥ ५० ॥

---

१ सहनशीले, वहनशीलेऽर्थे, सासहिर्वावहिः, "डौ सासहि-वावहि-चाचालि-पापतिः"॥५।२।३८॥ इति सूत्रेण यङि, द्वित्वे, यङ्लोपे, डौ प्रथमा-सिः, तदन्ता निपात्यन्ते । २ किङ्करः । ३ "आश्वीनोऽध्वा स योऽश्वेन दिनेनैकेन गम्यते"। अद्य श्वो वा भवमद्यश्वीनम् । ४ आगतमपि । ५ आयल्लको रणरणक उत्कठा, सैवाम्भस्तस्य तटाकिका । ६ इयतीः कालकलाः को देशो वसन्तश्रीमिश्रितामुपवनवासिनीं दशां लम्भितः । ७ पृथ्व्यां कलाकेलिः कन्दर्पस्तद्वत्केलिः क्रीडा यस्य । ८ सरस्वती वाणी, पक्षे नदी ।

ततो विमर्शकुण्डान्तरत्यन्तामलतामितः । घट-नालैस्त्रिभिर्ज्ञानादिकैर्व्याप मनःसरः ॥ ५१ ॥
तत्रोच्चरसकल्लोलस्नानानन्दाभिनन्दितः । अनन्तब्रह्मलक्ष्मीकः श्रीजिनः प्रतिभासते ॥ ५२ ॥
तदयं श्रीमहाधर्मो मातर्मे रोचतेतराम् । मृष्टं वैद्योपदिष्टं च भवतात्तु त्वदाज्ञया ॥ ५३ ॥
अम्बार्बुदगुणे पुत्रे धर्मकृद्वंशभूषणे । मानतुङ्गेऽप्यधिष्ठात्री श्रीमाता युज्यते यतः ॥ ५४ ॥
उदात्तया तया वाचा तदात्वं हि तदात्तया ॥ । प्रहृष्यन्तितरा तारं तमुवाच प्रसूरसौ ॥ ५५ ॥
तात ! तस्य पितुः सूनुर्न बद्धो भोगतन्तुना । यः पुंन्नागोऽवगाढोऽपि कमलां किल नर्मदाम् ॥५६॥

---

१ विचारं प्राप्तः । २ मनःसरसि शान्तरससमृद्धः अनन्ता परब्रह्मणो लक्ष्मीर्यस्य, वीतरागः । पक्षेऽनन्तः शेषः, "एकमूर्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः" इति वचनात् ब्रह्मलक्ष्म्यो यस्य कोऽर्थः वासुकिब्रह्मश्रीयुक्तो नारायणः । ३ अर्बुदं दशकोटयः । धर्मः पुण्यम्, वंशः कुलम्, मानो गर्वः; श्रीयुक्ता माता । पक्षे अर्बुदपर्वतः, धर्मोऽत्र धनुः, वेणुः, प्रमाणं, तस्याधिष्ठात्री श्रीमाता देवता । ४ उदात्तध्वनियुक्तया, "तत्कालेषु तदात्वं स्यात्" तत्कालं, तेन शालिनाऽऽत्ता तदात्ता तया । ५ पुरुषप्रधानः, हास्यदात्रीं श्रियं मत्तोऽपि । पक्षे हस्ती जलजीवेन कं पानीयं मलाति धारय०; नदीम् ।
॥ तदुक्तयेति च पाठः ।

जैनतत्त्वं स्फुरत्तेजस्तातााधिक्रियते त्वयि । यतः सिंहीपयः स्वर्णपात्र एवावतिष्ठते ॥ ५७ ॥
द्वादशात्मा गेहिधर्मस्तुङ्गे त्वय्युदयाचले । मच्चित्तकमलोल्लासी त्रयीतेजोमयः शुचिः ॥ ५८ ॥
उदेतु धातुरङ्गेण काष्ठा आपूरयन्निव । सञ्जीवनी दर्शनानां यत्करप्रसरास्थितिः (युग्मम्) ॥५९॥
सम्यक्त्वं पदकं यत्र व्रतद्वादशकं लता । सोऽर्द्धमाणवहारस्ते गृहिधर्मोऽस्तु भूषणम् ॥६०॥
हर्म्यिणामेत्र धर्माय जैनयित्र्याः पवित्रधीः । सांमत्यमित्यवेत्यासौ विशेषार्थमुदाहरत् ॥ ६१ ॥
स्वाख्यातकृत्ये विश्रान्ते कान्ते व्याकरणे निजे । व्याचिख्यासुरसौ न्यासमाशु वाचमुपाददे ॥ ६२ ॥
अवादीः सङ्गतं मातर्यदनादीनवं वचः । पितुस्तस्यासि सूनुस्त्वमित्यस्यार्थो विभाव्यताम् ॥६३॥

---

१ घटते । यत उक्तम्–"क्षीरं श्वानोदरे, सिंहीदुग्धमस्वर्णभाजने । निष्पुण्ये श्रीः, रसेन्द्रोऽग्नौ, धर्मस्तिष्ठति नाधमे" ॥१॥ २ सूर्यः, वेदत्रयी । पक्षे पवित्रः, ज्ञानदर्शनचारित्रत्रयी, द्वादशप्रकारः । ३ निश्चलता, सप्त धातवः, षड्दर्शनानाम्, हस्तास्थितिः । पक्षे काष्ठा दिशः, धातुर्गैरिकादिः, दर्शनानां लोचनानाम्, किरणाः । ४ "-हारस्त्वष्टोत्तरं शतम् । अर्द्धं रश्मिकलापोऽस्य द्वादश त्वर्द्धमाणवः" ॥ १ ॥ ५ जनन्याः, आदेशम् । ६ सु अतिशयेन आख्यातं कथितं कृत्यं प्रयोजनं, यस्मिन् प्रश्ने विशेषं कथयिता । पक्षे आख्यातकृत्याः प्रत्ययविशेषाः, विश्रान्ताभिधानव्याकरणे । ७ युक्तम्, निर्दोषम् । "दोषे त्वादीनवाश्रवौ" । ८ विचार्यताम् ।

[1]अतिजातोऽस्तु दूरेण सुजातोऽपि कथं सुतः । यः पञ्चविषयासक्तस्तस्याहं मुनिचक्रिणः ॥६४॥
त्वया मात्रैकयाऽप्येवमहमत्र सुखी यदि । किमुच्यते तु चारित्रे यत्रा[2]ष्टौ मातरो हिताः ॥६५॥
[3]क्षमोद्धारवराहेण पुरुषोत्तममूर्त्तिना । मया भव सुतेनादिपोत्रिणीवाम्ब ! पुत्रिणी ॥ ६६ ॥
साधुश्रावकयोर्गी[4]ता मेरुसर्षपसाम्यता । गृहिधर्मेण सिद्धार्थः कथं मातर्भवाम्यहम्? ॥ ६७ ॥
मच्चित्तभूतले [5]सप्ततत्त्वधान्यप्ररोहणा । प्रकाशयति चारित्रचैत्यस्थापनयोग्यताम् ॥ ६८ ॥
मातर्मा तद्विलम्बध्वं कृतको[6]लम्बनैरलम् । वीरसूः पुष्पमालासु भव चम्पकमालिका ॥ ६९ ॥
झञ्झावातेन तेनाथ वचसा भ्रमिता भृशम् । भूपीठे लुठिता भद्रा नि[7]ष्पत्राकृतवल्लिवत्॥७०॥
दीना मीनादपि मरोः क्षीणा रीणाध्वगादपि । मूर्छासमुच्छ्रयच्छेदे दूना मौनं मुमोच सा ॥७१॥

---

१ पितुः सकाशादधिकगुणोऽतिजातः, समानगुणः सुजातः । २ अष्टौ प्रवचनमातरः । ३ क्षान्तिः, पुरुषेषु उत्तमेन । पक्षे पृथ्वी, नारायणेन; आदिवराही । ४ कथिता । ५ यत्र प्रासादः स्थाप्यते तत्र प्रथमं शालि-यव-गोधूम-मुद्ग-वल्ल-चणक-चवलधान्यानि उप्यन्ते इति वास्तुव्रते । ६ कात्रिमैः । ७ "सपत्राकृति-निष्पत्राकृती त्वत्यन्तपीडने"। मूलच्छिन्ना । ❀ -वाल्लिकेति च पाठः।

श्रीमण्डपे त्वयि प्रौढा वत्स ! वत्सलता लता। किमिदं चेष्टितं तत्ते सन्तापौपयिकं[1] मयि ॥ ७२ ॥

कुलकाश्मीरकेदारकुङ्कुमस्तवकोपमः । विरागाय कथं जात ! जातः स्वपररञ्जकः ॥ ७३ ॥

पुण्याढ्यसार्वभौमेन[2] दिग्गजेनाङ्गजन्मना। उत्तराऽपि निराधारा त्वया विरहिता ह्यहम् ॥ ७४ ॥

सुनक्षत्राऽपि[3] विच्छाया विनेनं द्यौरिवाङ्गना । किञ्चित्कलावता किन्तु द्योतते नन्दनेन्दुना ॥७५॥

ताम्बूले[4] शर्कराचूर्णं यथा चैत्रे च वर्षणम् । तथा न वत्स ! वैराग्यं युज्यते नवयौवने ॥ ७६ ॥

ह्येधा पितुः क्रमेणैव क्रममाणः[5] प्रमाणवान् । सुतस्तुतस्ततस्तात ! क्रमायातस्त्वयं विधिः ॥ ७७ ॥

पुत्रोभयपदी धातुस्त्वं मर्त्यामर्त्यभोगभूः । ततस्ते युज्यते कर्तुं प्रियंवद ! पदद्वयी[6] ॥ ७८ ॥

---

१ सन्तापस्य उपाय एव औपयिकम्। २ उत्तरादिग्गजः सार्वभौमो नाम। पक्षे पुत्रेण उत्तरा प्रधानाऽपि। हिः निश्चये। ३ शोभननक्षत्रजाताऽपि, इनं पतिं, विज्ञानादिकला। पक्षे ग्रहगणयुताऽपि, सूर्यम्। षोडशकला, चन्द्रेण। ४ ताम्बूले, वर्ज्याऽपि शर्करा न युक्ता। भाडलीपुराणे यत उक्तम्–"चैत्रमासि जइँ वीजविजोइ वैशाखइँ जउ किंसू धोइ ॥ जेठमासि जउ जाइ तपं तउं कुण राषइ जलहर वरसंतउँ" ॥१॥ ततश्चैत्रे वर्षणं न हर्षकृत्। ५ "क्रमोऽनुपसर्गात्" ॥३।३।४७॥ इति सूत्रेणात्मनेपदम्। स्तुतः प्रशस्यः। ६ इहलोकपरलोकद्वयी॥

श्रीः काशयष्टिवच्चाढ्यम्भावुकेनाबुकेन ते । नीतेक्षुसमतां दक्ष ! सप्तक्षेत्रीनिवेशनात् ॥ ७९ ॥
कुलकाननकर्पूरद्रुम ! त्वमपि पूरय । सर्वाङ्गचङ्गसर्वाशाः दानैः परिमलैरिव ॥ ८० ॥
निन्दात्यागैर्जगद्वश्यं, गीतैः पूजा फलोत्तरा । पित्रोर्भक्त्या महाधर्मः, सन्तोषात्परमं सुखम् ॥ ८१ ॥
यथा सुखं सुखेनादस्तथाहि परमार्हतैः । दानशीलतपोभावाः साध्यन्ते भोगशालिभिः (युग्मम्) ॥ ८२ ॥
त्वया सिंहकिशोरेण कुलशैले स्वलङ्कृते । सुकृती स कृतीकृत्यं निजं चक्रे पिताऽपि ते ॥ ८३ ॥
तदीयपदवीपान्थ ! श्रीकल्याणाँचलं कुलम् । विबुधानन्दनेन त्वं नन्दनेन परिष्कुरु ॥ ८४ ॥
पूर्वं दीक्षाप्रदानान्मे वत्स ! वात्सल्यनिष्क्रयम् । मातृभक्तिकलाकामधेनुव्रज ! चिरं व्रज ॥ ८५ ॥
सुश्राद्धधर्मप्रासादे प्रतिमाभिर्विभूषिते । कल्याणकलसान् पश्चात् न्यस्येः पञ्चमहाव्रतान् ॥ ८६ ॥

---

१ काशयष्टिः सप्तवारान् क्षेत्रे निधीयते तदा इक्षुः स्यात् । आढ्यंभवनशीलेन । "पिता चाबुक आवुत्तौ" इति वचनादाबुकेन पित्रा । २ मनोरथो दिक् च । ३ "अणन्तं गीयवाइय-" । ४ माता च पिता च तयोः । ५ तथाहि निश्चयेन अदः दान० श्रावकैः साध्यन्ते; यथाऽमूनि पञ्चवस्तूनि एभिः । सुखेन । ६ दक्षः । ७ मेरुपर्वतम् । पुत्रेण । नन्दनवनेन । अलंकुरु । ८ मूल्यम् । मातृभक्तिकलैव कामधेनुस्तत्र गोकुलोपम !; गच्छ । ९ श्रावकप्रतिमाभिः ; पक्षे, देवमूर्त्तिभिः ।

एवं वयस औचित्याद् धर्मोऽप्याहारवद्वरः । स्वीकृतः कृतिना रुच्या परिणामेऽतिसुन्दरः ॥ ८७ ॥
रूपश्रीरमृतप्रातराशश्रीर्जगतीदृशाम् । मूर्त्ता कल्याणसिद्धिस्ते भाग्यसिद्धिः प्रसिद्धिभूः॥ ८८ ॥
प्रौढमर्त्यश्रिया बाढोपगूढैः प्रतिवासरम् । दिव्यभोगश्रिया नव्योपायनैः परिचर्यसे ॥ ८९ ॥
कुलप्राकारसर्वाङ्ग! भोगरुद्ध! कुमार! तत् । विवेशे त्वयि वैराग्यं कया युक्त्या सुरङ्गया॥९०॥(विशेषकम्)
गौभेद्रिणाऽथ गौर्भद्रा भद्रां प्रत्यभिधीयत । धर्मरङ्गमहारङ्गभूमिरङ्गावलीकला ॥९१॥
अम्बाऽऽत्मनीनमुक्तं यदर्वाचीनतयैव तत् । समीचीनं, पराचीनावस्थायाः प्रतिपन्थि तत् ॥९२॥
मातः ! कल्याणवार्त्तेयं यँदाशा दिग्गजेऽङ्गजे । पुण्यैरनन्तरूपा त्वं ध्रुवश्रीर्भव उत्तरा ॥ ९३ ॥
नास्तिके शकुनाः कुब्जे वास्तुदोषाः पशौ छलम् । निःस्वे नाहारदोषाः स्युर्न वैराग्यमसात्त्विके ॥९४॥

१ ज्वरे सति लघोर्वृद्धस्य च लङ्घनं वैद्येन न कार्यते, मतं तरुणस्य लङ्घनम् । २ वर्तने "कल्यवर्तः प्रातराशः," जगन्नेत्राणाम् । ३ आश्लिष्टः । ४ प्राविष्टम् । ५ गोभद्रस्यापत्यम्, अपत्य इञ् । गीर्वाणी, प्रशस्ता; धर्मरङ्ग एव मण्डप-भूमिस्तस्यां ये रङ्गा हर्षास्तेषाम् आवली तया मनोज्ञा । ६ आत्मने हितं; सत्यमिहलोकापेक्षया; परलोकापेक्षयाऽवरोधि । ७ हे मातः ! यद् दिग्गजे सार्वभौमे आशा उत्तरा । पक्षे अङ्गजे पुत्रे आशा मनोरथः ८ कुब्जे तृणकुटीरके ।

शास्त्रं वचस्विनां, शस्त्रं बलिनां, महतां निजम्। सर्वं पथ्यं दृढाग्नीनां, सर्वं* निर्वेदकृत्सताम् ॥९५॥
इत्यम्ब ! मम वैराग्यकारणं भवतारणम् । आकर्ण्यतां त्वया तूर्णं वर्ण्यमानं सकर्णया ॥९६॥
[2]मिताशङ्किपदन्यासं गार्हस्थ्यं दिव्यमेव मे। तप्तायोगोलकल्पेऽस्मिन् शुद्धिः सांशयिकी परम् ॥९७॥
[3]सुखैः केचन तुष्यन्ति निभृता एव तैः परे । उद्वेलाः सागराः केचिदन्ये स्थिरतरोदकाः ॥९८॥
निसर्गेणैव तद्भोगा [4]अभिष्वङ्गाय नाम्ब ! मे । निर्वेदोऽस्त्वेदवेदस्य [5]प्रणवस्तु प्रणीयते ॥९९॥
[6]साङ्गोपाङ्गाऽपि भोगाङ्गसामग्री मे तनूरिव। स्वामिश्रुत्या शिरोऽर्त्याऽसौ पीड्यतेऽपीड्यते न हि॥१००॥

---

१ "अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम्" ॥ १ ॥ इति वचनात् महतां सर्वे निजम् । २ मितं स्तोकं सशङ्कः पदन्यासः पादस्थापनं यत्र । "चरे पयाइं परिसंकमाणो" इतिवचनाद् गृहस्थत्वं दिव्यमेव । ३ केऽपि सुखैस्तुष्यन्ति, परेऽन्ये पुरुषाः तैः सुखैर्निभृताः पूरिता एव कोऽर्थः सन्तोषवन्तः । अत्र दृष्टान्तः । केचित् समुद्राः उद्वेलाः, लवणसमुद्रादयः । परे स्वयंभूरमणादयो निश्चलपानीयाः । ४ न आसक्तये । ५ ओङ्कारः, कथ्यते । ६ संपूर्णाऽपि, शरीरमिव, तनूशब्दः स्त्रीलिङ्गे ऊकारान्तोऽपि समस्ति । सीसकेन। न स्तूयते ।

* मनो-इति पाठान्तरम् ।

लक्ष्मीर्मे [1]लक्षणालीव सर्वसौख्यावहाऽपि हा* । मूर्द्ध्नि काकपदेनान्यस्वामिशब्देन निष्फला ॥१०१॥

[2]जात्यं तेजस्विनं प्रौढं भोगाभोगं तुरङ्गमम् । अन्यस्वामीति नाम्नाऽपि शृङ्गेणैव त्यजाम्यहम् ॥१०२॥

इयं विषयसामग्री शुभा रसवतीव मे । उद्[3]धुक्षिता परादेशानलैमातर्न रोचते ॥१०३॥

उच्छिष्टं क्रियते यत्तु भूपभू[4]तैर्निरङ्कुशैः । निशाभोज्यमिव त्याज्यं वैभवं तद्विवेकिना ॥१०४॥

पराज्ञा भोगसौख्येषु सर्वाङ्गसुभगेष्वपि । त्रसरेखेव रत्नेषु महामो[5]हिमहानये ॥१०५॥

घृ[6]तपूरेषु सूरः स्यात् दुःखाय यदि कर्करः । सुखे स्त्यान इव प्राज्ये न कथं भूभृदप्ययम् ॥१०६॥

[7]जनानां शर्कराः पद्या मृदूनां शालितन्दुलाः । विरक्त्यै दुःखमन्येषां कुशाग्रीयधियां सुखम् ॥१०७॥

---

१ लक्ष्मणश्रेणिरिव । आवहा अपीतिपाठे सन्धौ सत्यां सप्ताक्षराणि भवन्त्यतो न सन्धिः क्रियते । तालुके मूर्द्धि तालुसद्भावात् । २ "दूबल-कन्ना-बंकमुहा-घणआहार-सरोष । जे हुइं तुरियह पंचगुण तेहज स्त्रीअह दोष" ॥१॥ इतिजात्याश्वलक्षणानि । शिरसि शृङ्गो भ्रमरोऽश्वस्य स्यात् स त्यज्यते । ३ दग्धा । ४ भूपप्रेतैः । निरर्गलैः । ५ महिमन् शब्द आकारान्तोऽप्यस्ति । ६ घृते, समर्थः, पर्वतो भूपश्च । ७ शर्कराः पादौ विध्यन्ति पद्याः चरणदुःखकराः । सुकुमाराणाम् । पद्याशब्द उभयोर्विशेषणम् । दृष्टान्तो यथा—मूर्खाणां, विरागाय । "पुलहु जइ सा जणइ" । * -सौख्यावहा अपीति च पाठः ।

सुवर्णं वह्निनिक्षिप्तं वर्णिकावृद्धिमश्नुते । उष्णश्वासाभि[1]योगेऽपि मौक्तिकं म्लानिमीयते ॥११६॥
सामान्यवसनं क्षारशिला[2]कुट्टाककुट्टनैः । दीप्यते, देवदूष्यं तु नरस्पर्शेन दूष्यते ॥ ११७ ॥
राजोच्छिष्टान्नभाजोऽपि* हृष्यन्ति श्रीकरीधराः । जुगुप्सन्ते द्विजाः शुक्लाः भक्तराज्ञां [3]प्रतिग्रहम् ॥
राज्ञो दास्येऽपि तुष्यन्ति प्रायेण प्राकृता जनाः । न्य[4]त्कारं राजसत्कारं मेने गोभद्रनन्दनः ॥११९॥
लोकोत्तराणां कोपाय सर्वसामान्यसत्कृतिः । यथा स[5]कलदेवानां मूर्त्तौ वर्णकविस्तरः ॥१२०॥
सुकुमारा बहिर्देहे भवन्ति किल कोटिशः । अपमानाशने[6]र्घातैर्भिद्यते हृदयं न तु ॥ १२१ ॥
शालिभद्रः सुकुमारः स[7]बाह्याभ्यन्तरो ध्रुवम् । प्रभोः† श्रुतेर्मनो दूनं यस्य निश्वासतोऽङ्गकम् १२२॥
अथ श्रीशालिभद्राऽम्बा शालिकेदारभूरिव । नेत्रनीरप्लवापूर्णा विवर्णाऽवददीदृशम् ॥ १२३ ॥

---

१ संयोगेऽपि । २ वसनं वस्त्रं, रजकोपकरणम् । लोकोक्त्या "मोगरी" । ३ यतः स्मृतावुक्तम्:—"राजप्रतिग्रहो घोरो विषमिश्रमधूपमः । पुत्रमांसं वरं भुक्तं न तु राजप्रतिग्रहः"॥१॥ इति वचनात् । ४ तिरस्कारम् । ५ स्वयंभूदेवतानां, सप्रभावानां वा । ६ वज्रस्य । ७ सह बाह्याभ्यन्तराभ्यां वर्तते यः सः । * -भोज्येऽपीति पाठान्तरम् । † स्वामि- इति च पाठः ।

हा किं राजा मयाऽनायि राजमान्द्यमिवात्मनः । उदघोषि पुनः किंवा महावात इवाहितः ॥
साक्षादजाकृपाणीयमनणीयो विचेष्टितम् । क्षमस्व मे हृदाश्वास! राजश्वासप्रपीडित ! ॥१२५॥
दुग्धे पूतरका न स्युर्घृते तांस्तु त्वमीक्षसे । यदस्मिन् सुखसाम्राज्ये दुःखदोषान् विभाषसे ॥
त्वत्पित्राऽहं त्वदालम्बा मुक्ता युक्त्या कृपालुना । कथं वद निराधारां मुमुक्षुरसि वत्स! माम्? १२७॥
नृकुञ्जरस्य ते भाग्यार्गलितस्य प्रिया इमाः । सुवृत्ता भोगसौभाग्याश्चतुराः सुप्रतिष्ठिताः ॥ १२८ ॥
रोधाय विहिताः प्रौढा धात्रा द्वात्रिंशदर्गलाः । घनाबन्धाः समुल्लङ्घ्य कथं तात! प्रयास्यसि? (युग्मम्)
रम्भास्तम्भैः कथं सौधं नेत्रवस्त्रैश्च नौपटः । पद्मनालैर्गजालानं सन्नाहः केतकीदलैः ॥ १३० ॥
विलेखनं कुँकूलाग्नेः किंवा चम्पककोरकैः । कर्पूरफालिकाभिर्वा प्रासादशिखरं भवेत् ॥१३१॥

१ क्षयरोगः । राजाऽऽगत इति किमुदघोषि । बृहद्वात इव । २ यथा निपातयितुमानीतायाश्छागिकायाः प्रहरणाय विलम्बितायाः शस्त्रस्खलनात्स्वयमेव प्रहरणा । प्रकर्षणम्, गुरुतरम् । ३ तान् पूतरकान् । ४ मोक्तुमिच्छुः । ५ शालि-प्रियाः, दक्षाः, पूज्याः । पक्षे चतु० हस्तिशाला, सुवर्तुलाः; पक्षे आचारः । ६ अभीष्टपुत्र ! । ७ "-करीषाग्नेः कुकूलस्तु तुष

विचारयं चिरं चारुचातुरीचतुराननं !। साध्यते किं जितानङ्ग ! व्रतमङ्ग ! तवाङ्गकैः (विशेषकम्)
शालिः प्राहाम्ब ! सन्देहे श्रियां सांयात्रिका यदि । त्यक्त्वा पुत्रकलत्रादि विशन्ति क्षारवारिधौ ॥
ततः प्रशमपीयूषसागरं विजिगाहिषुः । आत्यन्तिकैकान्तिकार्थसिद्धये व्यवसायवान् ॥१३४॥
विपश्चिन्निश्चितश्चित्ते विक्रमोपक्रमक्रमः । वधूभिरुपरुध्येऽहं देहमोहेन वा कथम् ? (युग्मम्)॥१३५॥
अग्निशौचानि चीराणि वपूंषि च मनीषिणाम् । स्निग्धानि सुकुमाराणि शुध्यन्ति तपसाऽग्निना॥
दुर्मोचमाग्रहं मत्वा तनयस्येति कातरा । कालक्षेपचिकीः कामं माता सुतमभाषत ॥१३७॥
स्वर्भोगैर्देवदन्तीव सदैव सुखलालितः । नृगन्धशयनाहाराविहाराभ्यासमातनु ॥ १३८ ॥
उपश्रुतिमिव श्रुत्वा वाचं वाचस्पतेः प्रति । प्रत्यहं प्रेयसीमेकामेकामुज्झांचकार सः ॥ १३९ ॥
विश्वंचित्रे निजे सौख्ये दत्तरेखाश्च हेलया । तूलिकास्तूलिकाः साक्षात्सुसूक्ष्ममृदुलोमिकाः ॥१४०॥

---

१ ब्रह्मन्, कोमलामन्त्रणे । २ पोतवणिजः । ३ निश्चयार्थे । ४ विद्वद्भिर्निर्णीतः । ५ विदुषाम् । ६ मोचितुमशक्यम् । ७ ऐरावण इव । ८ बृहस्पतिसमानः । ९ उज्झदुत्सर्गे धातुः । १० जगत्याश्चर्यकारिणि ।

इतश्चेह पुरे देवकनीनामकनीयसी । कनीयसी स्वसा शालेः सुभद्रा नाम विद्यते ॥ १४१ ॥
तत्प्राणनाथः पुण्याम्भस्तल्लिका नृमतल्लिका । श्रीमल्लिकावसन्तर्त्तुर्धन्यः सौजन्यभूरभूत् ॥१४२॥
तस्यान्यदा मुदा स्नाने प्रस्तुते स्कन्धबन्धयोः । दयितानेत्रपत्रान्तात्पेतुः कोष्णाश्रुबिन्दवः ॥१४३॥
बिन्दुर्बिन्दूनसौ सौख्यशून्याबिन्दून् प्रियां जगौ । निर्यान्त्यश्रुकणाः किं ते भृङ्गाभा नेत्रपद्मतः ? ॥
सा प्रत्याह मम स्वामिन् ! सोदरः संयमादरात् । एकैकां प्रेयसीं प्रेमहेमैककषपट्टिकाम् ॥१४५॥
कन्दर्पधूर्त्तसंमोहमूलिकामिव तूलिकाम् । मुञ्चति प्रत्यहं हन्त ! तदहं दुःखपूरिता (युग्मम्) ॥१४६॥
धर्मवीरपथाध्वन्यः प्राह धन्यः सुधीनिधिः । य एवं कातरः स स्यात् किं तृष्णादीर्घिकातरः ? ॥१४७॥
अभ्यमित्रीणताभाजामपि सिंहावलोकितम् । नृणां पिशुनयत्येव पशुत्वमिव मानिनाम् ॥१४८॥

---

१ देवकन्यानां ज्येष्ठा २ लघ्वी । ३ तटाकिका; प्रधानः; लक्ष्मीरेव मालती तत्र वसन्त ऋतुः । ४ एकस्मिन् दिने, कर्तुमारब्धे; अंसयोः; भार्या, पत्रशब्दोऽत्र शोभाऽर्थः; किञ्चिदुष्णम् । ५ "विदिता विदुरो विन्दुः" । ६ मोहनवल्ली, अस्मि । ७ शत्रुं प्रति संमुखं गच्छताम् , पिशुनयति कथयति ।

कामार्थयोरपि प्रोक्तं दीर्घसूत्रः[1] प्रणश्यति । ततः प्रासिद्धमेवैतद्धर्मस्य त्वारिता गतिः ॥ १४९ ॥
भीरु ! भीरुः स ते भ्राता तनुते [2]तुण्डताण्डवम् । शारदीन इवाम्भोदः सार[3]दीनतया तया ॥ १५० ॥
शालिभद्रः स ते बन्धुरहो [4]तात्त्विकसात्त्विकः । स्वजनानुनयैषी च क्रमात्त्यजाति-वल्लभाः ॥१५१॥
तस्यां विहितमौनायां दूनायामपि सर्वथा । तदीयपक्षपातेन ससान्यास्तं प्रियाः*जगुः ॥१५२॥
कातरा अपि सङ्ग्रामवार्त्तामावर्तयन्त्यहो । न श्वसन्त्यपि निस्वानो[6]द्दामसांराविणे रणे ॥१५३॥
परं प्रति प्रवदतां संयमः सुकरः परम् । न सूर्यमण्डलस्येव [7]समीपेऽप्युपवेशनम् ॥ १५४ ॥
प्राणेश ! चारुचारित्रचारश्चेत्सुकर†स्तदा । भोग[8]व्यासमपास्याशु स्वयमासेव्यते न किम् ? ॥१५५॥
धन्यंमन्यस्ततो धन्यः प्रमोदाददे वचः । दिष्ट्या कल्याणि ! [9]कल्याणि मद्भाग्यानि जयन्त्यहो ॥

---

१ 'दीर्घसूत्री विनश्यति' इति । कामार्थयोः शास्त्रोक्तत्वात् । दीर्घसूत्रश्चिरक्रियः । २ मुखनृत्यम् । ३ शरत्कालीनमेघ इव । सारं बलं तेन रहितया । ४ सत्यसत्त्ववान् । ५ पुनः २ कथयन्ति । ६ रवाद् भयानके ७ संयमस्य । ८ भोगविस्तरं, अङ्गीक्रियते । ९ प्रधानानि । * -स्तास्प्रिया इत्यपि पाठः । † सुचर इत्यपि पाठः ।

यूयं श्रृङ्गारवाहिन्यो गम्भीरा रसपूरिताः। अभूवन् पथदेशिन्यः सत्त्वाक्षिप्ता[1] इव स्वयम् ॥१५७॥
तदहं वरिवस्यामि तपस्यायै जिनेश्वरम्। भवतीषु[2] भवन्तीषु भवतीराय कारणम् ॥१५८॥
निशम्येति वचो रूक्षं तमूचुः प्रणयात्प्रियाः। नर्म[3]संवर्मितं कर्म न शर्म प्रजिघांसति ॥१५९॥
मूलं[4] धर्मार्थकामानां स्वयमेवोपलालिताः। कुतः कान्त! निराधाराः श्रियः कान्ताश्च मोक्ष्यसि १६०
भाग्यसौभाग्यसाराणां सतीनां धर्मधीजुषाम्। श्रीणां स्त्रीणां च मन्येऽहं त्यागेनैवोत्तमं फलम् ॥
इत्युदीर्य लसद्धैर्यं जीववीर्यविशेषवान्। प्रस्थितः[6] स्थिरतामेरुप्रस्थसुस्थमतिस्थितिः (युग्मम्) ॥
सिद्धिः सत्त्वं[7] कलाऽभ्यासं लक्ष्मीः पुण्यं प्रभा रविम्। अनुयान्ति यथा नाथ! तथा कान्तं कुलाङ्गनाः॥
पतिव्रताव्रतं सत्यं तीव्रं निःसङ्गताव्रतम्। उभे आराधयिष्यामस्तवानुगमलीलया ॥१६४॥
एवमुक्तवतीः प्रीत्या प्रेयसीः श्रेयसीतराः[9]। परं[10] परममित्युक्त्वा धन्यस्ता अभ्यनन्दयत् ॥१६५॥

---

१ साहसप्रेरिता इव। २ युष्मासु; जायमानासु। ३ नर्मणा हास्येन संवर्मितं सहितं कर्म। ४ अनाविष्टलिङ्गत्वात् मूलम्। ५ साध्वीनाम्, त्यजनेनैव; पक्षे विद्यमानानां दानेन। ६ चालितः, मेरुशिला। ७ साहसम्। ८ वने। ९ अतिशयेन श्रेयस्यः श्रेयसीतराः। प्रकृष्टे तरतमौ। १० भव्यं भव्यमिति प्रशशंस।

उत्कण्ठया निर्वृतिनायिकायाः कटाक्षितः संयमकाम्यया च।
पूर्वप्रियाभिर्वरिवस्यमानः स वीरनाथागमनं निदध्यौ ॥ १६६ ॥

दिव्यश्रीपरिवेषितां रसवतीं भोगाङ्गभङ्गीमिमा-
मानन्दाश्रुविमिश्रसुन्दरदृशा श्रीश्रेणिकेनोक्षिताम्।
बाष्पापूर्णदृशा चकोरकवरेणेवान्तरुद्यद्‌द्विषां
श्रीशालिः किल मानशालिनृपतिः संभावयामासिवान् ॥ १६७ ॥

श्रीशालिचरिते धर्मकुमारसुधिया कृते।
श्रीप्रद्युम्नधिया शुद्‌धे पञ्चमः प्रक्रमोऽभवत् ॥ १६८ ॥

## इति श्रीशालिभद्रलीलाकथायां पञ्चमः प्रस्तावः ॥

---

१ निर्वृतिरेव नायिका तस्या उत्कण्ठया कटाक्षितः, पुनः पुनर्वीक्षितः; वाञ्छया, सेव्यमानः, चिन्तयामास।
२ परिवृताम्, उत्कटगरलाम्, विषमिश्रितां रसवतीम्, यदा चकोरः पश्यति तदा रोदनं करोति।

शालेः पुण्यकणश्रेणिः प्रशस्तां स्वास्तिकश्रियम् । श्रयन्ती देवदेवस्य पुरतः परिभाव्यताम् ॥१॥
सार्द्धं श्रीशालिभद्रस्य श्रद्धयेवाययौ प्रभुः । महतां हि स्पृहाप्राप्ती युग्मजाते इव ध्रुवम् ॥२॥
शृङ्गारहेतुमृद्धानां दुर्विधानां तु शम्बलम् । वैभारं क्षोणिकल्याणालङ्कारं धरणीधरम् ॥ ३ ॥
भूर्भुवःस्वस्त्रयीहीरः श्रीवीरः सुरसेवितः । अलञ्चक्रे प्रभावाढ्यो भववारितरः प्रभुः (युग्मम्) ॥४॥
मोहद्रोहापशरणं शरणं भवभीभृताम् । सुरैरकारि समवसरणं शरणं श्रियाम् ॥ ५ ॥
धन्य एनःखगश्येनः स्ववयस्येन शंसितम् । विदाञ्चक्रे विदां चक्रवर्त्ती श्रीधर्मचक्रिणम् ॥ ६ ॥
दीनादीनां ददद्दानं याप्ययानं समाश्रितः । सकलत्रोटितस्नेहः सकलत्रः सुधीर्द्विधा ॥ ७ ॥
सोऽभ्येत्य प्रभुपादान्ते दान्तेन मनसा भृशम् । मोक्षोपायमुपायंस्त प्रशस्तः संयमश्रियम् (युग्मम्)॥

---

१ वीरस्याग्रे। २ पुण्यवतां यस्मात् कारणात् स्पृहा वाञ्छा तस्याः प्राप्तिश्च ते उभे अपि युग्मजाते इव । ३ दरिद्राणां फलादिना शम्बलभूतम् । ४ शरणं गृहम् । ५ पापपाक्षिणस्तत्र श्येनः "सीचाणुं" । ६ विदुषाम् । ७ सुखासनम् । ८ सकलान् त्रायते इति सः । पक्षे सभार्यः । ९ परिणीतवान् ।

श्रीवीरागमनं धन्यव्रतं [1]मत्वाऽथ शालिना । जितंमन्येन साक्षेपं जनन्यभिदधे तदा ॥ ९ ॥
यस्या धन्यः स जामाता या च माताऽम्ब ! मेऽभवः । सा त्वं किं [2]प्राञ्जले मार्गे बम्भ्रमिष्यति पिङ्गला ॥
स्वसा स्वसुःपतिर्यस्येयतु[3]र्नासीरवीरताम् । सोऽहं पाश्चात्ययानाय स्वेच्छया किमु नोत्सहे ? ॥ ११ ॥
एकं यियासुरग्रे सार्थोऽप्यय ऽथ गृहोत्थितः । सूनुस्ते[4]न कथं रोद्धुं शक्योऽयमिति निश्चिता ॥ १२ ॥
भद्रा सं[5]वर्म्य धैर्येण वज्रेणेव निजं मनः । [6]प्रवीणतानदीवेणिः श्रीश्रेणिकमुपागमत् (युग्मम्) ॥ १३ ॥
व्यजिज्ञपच्च राजानं दिव्यश्रीर्देव ! मेऽङ्गजः । वीराधिवीरः श्रीवीराद् [7]व्रतादानं समीहते ॥ १४ ॥
राज्यश्रीमङ्गले हे[8]मकुटेन मुकुटेन तत् । पवित्रेणातपत्रेण चामरैर्विस्मितामरैः ॥ १५ ॥
नरेन्द्रचिह्नैरह्नार्यं सुप्रसादं प्रसीद मे । दीक्षामहोत्सवं सूनोरन्यूनं येन कारये (युग्मम्) ॥ १६ ॥

---

१ ज्ञात्वा, सोद्यमम् , उक्त्वा । २ सरले । भृशमाकुला । ३ "नासीरं त्वग्रयानं स्यात्" तत्र वीरः सुभटः । प्रापतुः । ४ तेन कारणेन । ५ वर्मणा संनह्य । ६ प्रबलतानदीप्रवाहः । ७ परिव्रज्याम् । ८ हेमकुम्भेन । ९ शीघ्रं, वितर, संपूर्णम् ।

वज्रातिवर्चसा तेन वचसा भूभृदाहतः । आह तद् दुःखतो भद्रामार्तां भद्रां वशामिव ॥१७॥
सा भोगजलधेर्वेला हेला सोमा लता क्व सा । शालेः क्व चारुचारित्रभारोद्धरणधीरता ॥१८॥
भूधरोऽपि तृणं यत्र भोगश्रीरस्य सा पृथुः । उन्मग्नेवापगा युक्तं सुतरा सुतरामभूत् ॥ १९ ॥
विभूतेस्त्यागभोगाभ्यां धिग् दूनास्तद्धना वयम् । धन्यः श्रीशालिरेवायं मोक्तुं भोक्तुं च यः क्षमः ॥
तदहं स्वयमेवैत्य शालेर्निष्क्रमणोत्सवम् । विधाय श्वासखेदस्य तस्य दास्यामि निष्क्रयम् ॥२१॥
इत्यादिश्य समाश्वास्य राजचिह्नप्रदानतः॥ व्यसाक्षीत् प्रीतिफुल्लाक्षीं भद्रां भद्रङ्करः प्रभुः ॥२२॥
श्रीशालिरथ गोभद्रं देवं प्रत्यक्षमूचिवान् । तात ! दिव्यमहाभोगश्रियां विश्राणनान्मम ॥ २३ ॥
अनु रामं यथा पुत्रा भ्रातरश्चानु लक्ष्मणम् । भृत्या अनु हनूमन्तमनु त्वां पितरस्तथा (युग्मम्)॥

---

१ वज्रादपि कठोरेण । २ राजा । ३ भद्रजातीयां हस्तिनीमिव । ४ वैताढ्यगिरौ यस्यां भूभृदपि तरति सा उन्मग्ना इव सुखेन तीर्यते यथेष्टम् । ५ पतितमुद्राग्रहणकम्बलाग्रहणलक्षणाभ्याम् । ६ क्षणशोधनम् । ७ प्रेषयामास । ८ दानात् । ९ अनुशब्दः 'पूठिइ' । ॐ-प्रसादतः ।

पितरः [1]सुतसात्कुर्युर्विश्वेऽपि श्रियमैहकीम् । यौष्माकीणा अहं प्रापं लक्ष्मीरामुष्मिकीरपि ॥२५॥

छायातरोः फलं पुष्पोद्गतम[2]श्नन्ति पक्षिणः । सुधियः पुण्यवन्तस्तु प्रभावभवमप्यदः ॥ २६ ॥

तव प्रसादाद्दिव्यश्रीरनुभूता मयाऽद्भुता । [3]जीवन्मुक्तिरिवाध्यात्मविदा योगस्य दुर्लभा ॥ २७ ॥

स्वसूनोः साम्प्रतं तात ! वीरनाथात् प्रपूरय । प्रशमश्री[4]परीरम्भसंरम्भारम्भकौतुकम् ॥ २८ ॥

सुरः प्राह [5]सुजातोऽसि धीर! धन्योऽसि धीनिधे!। व[6]र्षीयान् यदहं चक्रे व्रतं तद्यौवने त्वया ॥२९॥

[7]नरश्रियाऽपि बध्यन्ते नरा रज्ज्वैव रङ्कवः। दिव्याश्रियाऽपि पुत्र!त्वं सिंहः शृङ्खलयेव न ॥३०॥

किं ते भूयः प्रियं तात! करोमि वद कोविद!। भवनाटकनि[8]र्वाहसन्धिसन्धाविधायिनः ॥ ३१ ॥

आलपत्[9]प्राञ्जलिः शालिः प्राप्तकालं विशालधीः । मम निष्क्रमणोत्साहैर्दिव्यर्द्धिं सफलीकुरु ॥ ३२ ॥

---

१ सुतवशाम्, इहलोकसंबन्धिनीः; परलोकसंबन्धिनीः । २ अशोकस्य भक्षयन्ति, पुनः प्रभावोत्पन्नं प्रत्यक्षोपलक्ष्यमाणं फलम् । ३ जीवतो मुक्तिः जीवन्मुक्तिः । ४ परीरम्भ आश्लेषः, संरम्भ आटोपः प्रारम्भः । ५ "मातृतुल्यगुणो जातोऽनुजातश्च पितुः समः । अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः"॥१॥ ६ वृद्धः । ७ मनुष्य-श्रिया। रज्ज्वा दोरकेण, मृगाः। ८ अन्त्यानिर्वाहसन्धानप्रतिज्ञां कुर्वतः। ९ योजितहस्तः, समयोचितम्, दीक्षामहोत्सवैः ।

एवं जनकमापृच्छ्य स्वच्छः स्वच्छन्दशौर्यवान्[1]। प्रेयसीः श्रेयसीभक्तीरापपृच्छे महेच्छधीः ॥३३॥

यूयं मातृपदाम्भोजसारसंवर्त्तिका[2] इव । वर्त्तध्वं सततं प्रीत्या परस्परसुसंहताः[3] ॥ ३४ ॥

भवतीनां जिनाज्ञेवाराध्यमाना[4] ममाम्बिका । चिन्तासम्भारसंसारनिस्ताराय भविष्यति ॥ ३५ ॥

ततो विजितमोहारिवीरवीरजयन्तिका[5] । चैत्येषु धर्मपूर्वाह्णमह्नाय[6]ाष्टाह्निका व्यधात् ॥ ३६ ॥

विवेकराज्ये सप्ताङ्गीं सप्तक्षेत्रीं धनैर्घनैः[7] । प्लावयित्वाऽयमातेने प्रशस्यश्रीनिबन्धनम् ॥ ३७ ॥

अथ दीक्षाऽभिषेकाय स्नानमण्डपमभ्यगात् । अदभ्र[8]शरदभ्रौघमिव कन्यादिवाकरः ॥ ३८ ॥

दानतीर्थं तीर्थतोयैस्तं सेवितुमिवागतैः । देवकन्याः स्वयं धन्यंमन्याः शालिमसिस्नपन्[9] ॥ ३९ ॥

अथ चन्द्राधिकैर्द्वेधा चर्चितो हरिचन्दनैः । धर्मध्यानैरिवाश्लिष्टः परितः स्फुरितप्रभैः ॥ ४० ॥

तेजःसारैरलङ्कारैर्भौमदिव्यैर्मणीमयैः । अतिप्रमाणैः कल्याणैरैहिकामुष्मिकैरिव ॥ ४१ ॥

---

१ वलवान् । श्रेयसी भक्तिर्यासां ताः । २ वर्तनशीलाः । "पक्षे संवर्तिका स्यान्नवदलम्"। ३ मिलिताः । ४ सेव्यमाना । ५ वीरपताका । ६ शीघ्रम् । ७ निविडैः । ८ प्रचुरम्, कन्यासंक्रान्तौ यथा सूर्यः । ९ स्नपयामास ।

पा[1]रिजातकसन्तानमन्दारोदारदामभिः । सौरभ्यवासिताशाभिर्मूर्ताभिरिव कीर्त्तिभिः ॥ ४२ ॥
शमवारिधिडि[2]ण्डीरपिण्डैरिव समुज्ज्वलैः । दुकूलैः सुखमामूलैः सुसोमालैरलङ्कृतः ॥ ४३ ॥
विधायार्[3]चां जिनार्चायाः कृतकौतुकमङ्गलः । सं[4]भाव्य दानसंमानैर्वदान्यः सर्वथाऽर्थिनः ॥४४॥
नराष्टाग्रसहस्रोह्यविमानोत्सङ्गसङ्गतः । सितच्छत्रेण सच्छायः श्रीकरीशतशालिना ॥ ४५ ॥
चामरैश्चाम[5]रैर्वीज्यमानो मानोन्नतैर्नतैः । वर्यतूर्यशतारावस्फूर्जज्जयजयध्वनिः ॥ ४६ ॥
र[6]म्भासङ्गीतसङ्गीतस्फुरद्धवलमङ्गलः । लसल्लाजाञ्जलिक्षेपदक्षवृद्धा[7]भिनन्दितः ॥ ४७ ॥
भूपाल इति बालाभिर्मुग्धाभिश्च महेन्द्रवत् । प्रौढाभिर्गाढमूढाभिः कन्दर्प इति कल्पितः ॥४८॥
श्रीश्रेणिकनरेन्द्रेण गोभद्रेण सुपर्वणा । परीतो भद्रया साश्रुचक्षुषा च स्[8]नुषाजुषा ॥४९॥

---

१ कल्पद्रुमविशेषबृहन्मालाभिः । २ फेनपुञ्जैः सुकुमालैः । ३ पूजां जिनप्रतिमायाः । ४ संमान्य, प्रियवचनप्रदानशीलश्च । ५ देवैः । ६ देवाङ्गनानृत्यगीतैः स्फुरन्तो धवलमङ्गला यत्र जयध्वनौ, 'लाजाः स्युः पुनरक्षताः' । ७ वृद्धस्त्रीभिः; भृशं पाणिगृहीताभिः । ८ वधूसहितया ।

सेनाः स्वामिपरित्यक्ताः ज्ञानशून्याः क्रिया इव। विद्या अमूलमंत्राश्च भाग्यहीना [1]गुणालयः ॥६६॥
[2]करेणवो यथा यूथनाथेन च विवर्जिताः॥शालित्यक्ताः शालिकान्ता भ्रान्तास्तद्वद् व्यचिन्तयन्॥(युग्मम्)
अलं परिमलं शालेः कलयन्त्योऽपि निष्कलाः। [3]शस्येन रहितास्तेन ध्रुवं [4]खलरसा वयम् ॥ ६८ ॥
[5]सकर्णास्तूर्णयेत् स्वर्गवर्णिका वर्णिताऽप्यहो । नि[6]र्वर्णिताऽप्यकर्णाभिरस्माभिरपकर्णिता ॥ ६९ ॥
यदयं दिव्यभोगाङ्गसुभगः प्राणवल्लभः । [7]नान्वयायि शशीवात्र ताराभिर्ग्रहणक्षणे ॥ ७० ॥
भूगतैरावताद्भृङ्ग्यो मन्दाराणि धयन्त्यहो । समं तेन तु नो यान्ति स्वर्गमार्गे तथा वयम् ॥७१॥
[9]सांक्रामिकं हि भाग्यस्य फलं सत्त्वस्य नो पुनः । [10]शालिपुण्यैः सुखं प्राप्तास्तत्सत्त्वैर्न वयं व्रतम् ॥७२॥
एवं वियोगविवशा दिवसानत्यवाहयन् । समान् [11]समासहस्रस्य तस्य नश्यत्सुखाः स्नुषाः ॥७३॥

---

१ श्रेणयः। २ हस्तिन्यः। ३ प्रधानेन। पक्षे धान्येन। ४ खलभूमितुल्याः। "खलउं"। ५ विदुषः। उत्सुकीकुर्यात्। ६ भुक्ताऽपि मूर्खतुल्याभिरस्माभिरवगणिता। ७ नानुगतं, तारकाभिः। ग्रहणसमये। ८ अलङ्कारार्थं हस्तिमस्तकस्थानि। पिबन्ति। ऐरावतेन। ९ संक्रमणशीलं पुरुषादिभाग्येनाऽन्ये सुखिन इति हेतोः सांक्रामिकं पुनः सत्त्वस्य न फलम्। १० यतः शालिपुण्येन वयं सुखिन्यस्तत्सत्त्वेनास्माभिर्व्रतं न प्रतिपन्नम्। ११ "हायनाब्दं समाः शरत्"। वर्षसहस्रसमान् दिनान् अतीताः गतसुखा वध्वः। ॐ—: श्रान्तास्तद्वदचिन्तयन् इति पाठभेदः।

संयमश्रीविवाहेऽस्य धन्यो धन्यमुनिस्तदा । युक्तं स्वसृपतिः प्रापदानुचर्येण वर्यताम् ॥ ५८ ॥
सङ्गतिः सैङ्गता शालेः सर्वशस्यशिरोमणेः । मात्राऽधिकेन धन्येन जगज्जीवातुनाऽमुना ॥ ५९ ॥
धार्मिकास्तीर्थयात्रायामर्थयात्रासु सोद्यमः । युवा विवाहे शूरश्च युधि पश्चात् स्थितो यथा ॥ ६० ॥
जामातरं सुतां पुत्रं तपसे प्रस्थितं गृहात् * । भद्राऽऽलोक्य तदा मेने तथा स्वमपि वञ्चितम् (युग्मम्) ॥
श्रेणिकः श्रीमहावीरं धन्यशालिमुनी अपि । नत्वा राजगृहं प्राप विस्मयं च महामनाः ॥ ६२ ॥
पुत्रं पोतमिवारोप्य हित्वा चरणसागरे । भद्रा जगाम विद्राणा सस्नुषा विमुखायिता ॥ ६३ ॥
देवारामममदेवद्रुं मेने निर्वासवं दिवम् । निःसोमं व्योम विनृपं देशं सा वेश्म तन्निजम् ॥ ६४ ॥
भृशं रक्षाकृते चिन्ताहेतुः सूनोर्जनीजनः । तस्या जज्ञे यथा कायः परकायप्रवेशिनः ॥ ६५ ॥

---

१ शालेः । २ अनुचरत्वेन । ३ युक्ता । ४ एकदिनपर्यायाधिकेन । पक्षे एकया मात्रयाऽधिकेन । ५ जगज्जीवकेन । ६ "धर्माध्यक्षस्तु धार्मिकः" । ७ उद्यमवान् नरः । ८ धन्यम् । ९ महात्मा । १० विमुखाचरिता । ११ नन्दनवनम् । १२ वधूजनश्चिन्ताकारणं जातः । * पुरादिति पाठान्तरम् ।

सेनाः स्वामिपरित्यक्ताः ज्ञानशून्याः क्रिया इव। विद्या अमूलमंत्राश्च भाग्यहीना गुणालयः ॥६६॥
[2]करेणवो यथा यूथनाथेन च विवर्जिताः॥शालित्यक्ताः शालिकान्ता भ्रान्तारतद्वद् व्यचिन्तयन्॥* (युग्मम्)
अलं परिमलं शालेः कलयन्त्योऽपि निष्कलाः। [3]शस्येन रहितास्तेन ध्रुवं [4]खलरसा वयम् ॥ ६८ ॥
[5]सकर्णास्तूर्णयेत् स्वर्गवर्णिका वर्णिताऽप्यहो । [6]निर्वर्णिताऽप्यकर्णाभिरस्माभिरपकर्णिता ॥ ६९ ॥
यदयं दिव्यभोगाङ्गसुभगः प्राणवल्लभः । [7]नान्वयायि शशीवात्र ताराभिर्ग्रहणक्षणे ॥ ७० ॥
भूगतैरावताद्भृङ्ग्यो [8]मन्दाराणि धयन्त्यहो । समं तेन तु नो यान्ति स्वर्गमार्गं तथा वयम् ॥७१॥
[9]सांक्रामिकं हि भाग्यस्य फलं सत्त्वस्य नो पुनः । [10]शालिपुण्यैः सुखं प्राप्तास्तत्सत्त्वैर्न वयं व्रतम् ॥७२॥
एवं वियोगविवशा दिवसानत्यवाहयन् । समान् [11]समासहस्रस्य तस्य नश्यत्सुखाः स्नुषाः ॥७३॥

---

१ श्रेणयः । २ हस्तिन्यः । ३ प्रधानेन । पक्षे धान्येन । ४ खलभूमितुल्याः । " खलउं " । ५ विदुषः । उत्सुकीकुर्यात् । ६ भुक्ताऽपि मूर्खतुल्याभिरस्माभिरवगणिता । ७ नानुगतं, तारकाभिः । ग्रहणसमये । ८ अलङ्कारार्थं हस्तिमस्तकस्थानि । पिबन्ति । ऐरावतेन । ९ संक्रमणशीलं पुरुषादिभाग्येनाऽन्ये सुखिन इति हेतोः सांक्रामिकं पुनः सत्त्वस्य न फलम् । १० यतः शालिपुण्येन वयं सुखिन्यस्तत्सत्त्वेनास्माभिर्व्रतं न प्रतिपन्नम् । ११ " हायनाब्दं समाः शरत् " । वर्षसहस्रसमान् दिनान् अतीताः गतसुखा वध्वः । * —: भ्रान्तास्तद्वदचिन्तयन् इति पाठभेदः ।

प्राप्याथ जिनराजाज्ञां विश्वकर्मापराजितौ । द्रव्यादीनां विचारज्ञौ सूत्रधारौ महामुनी ॥७४॥
विहारेण विहारेण प्रतिमाशतशालिना । तावलञ्चक्रतुः क्षोणीं श्रीमहोदयहेतुना (युग्मम्)॥ ७५ ॥
अध्यजीगपदेकादशाङ्गीं श्रीगौतमस्त्वमू । पात्रे निवेशिता विद्या कल्याणाय द्वयोरपि ॥७६॥
गुरुणा गौतमेनेह गोतमेनेव सङ्गतौ । अभूतां कल्यानड्वाहाविव तौ साधुशिक्षितौ ॥ ७७ ॥
गीतार्थौ निर्विगीतार्थौ सुश्रुतावपि विश्रुतौ । धन्यशालिमुनी धन्यौ तेपाते दुस्तपं तपः ॥७८॥
यत्र देहे नृपश्वासैः शूचीसूचा प्रपञ्चिता । लूंका झलझला तत्र मलयानिलतां गता ॥ ७९ ॥
यद्राजकरसंपर्कादपि तापमवाप तत् । चण्डांशुकरसंसर्गं देहं सेहे मृणालवत् ॥ ८० ॥

१ द्रव्यक्षेत्रकालभावानाम् ; सूत्रं द्वादशाङ्गी । पक्षे द्वावपि सूत्रधारौ । महाज्ञानिनौ । २ विहारो नवकल्पादिरूपः। प्रतिमाः-"दंसण १ वय २ सामाइअ ३ पोसह ४ पडिमा ५ अवंभ ६ सचित्ते ७ । आरम्भ ८ पेस ९ उद्दिट्ठवज्जए १० समणभूए ११ अ" ॥ १ ॥ ३ मोक्षः । पक्षे प्रासादेन जिनप्रतिमाः; लक्ष्मीमहोदय. । ४ भाणितवान् । ५ मोक्षाय । गुरुशिष्ययोः । ६ प्रकृष्टो गौर्गोतमः । ७ प्रधानवृषभाविव । ८ यौ सुश्रुतौ तौ विश्रुतौ कथमिति विरोधः। विरोधभञ्जने ज्ञातार्थौ प्रधानितार्थौ; विख्यातौ। ९ शूचिकाकल्पना कथिता । १० लोकोक्त्या "लू"।

यत्र गोशीर्षचर्चाऽपि स्वर्णे गैरिकतामगात् । मलाविलं तदेवाङ्गमूहे किट्टितलोहताम् ॥ ८१ ॥
तस्य गात्रं कान्तलोहपात्रं यत्र शमः पयः । उपसर्गाग्नितापेऽपि शिखामाप विशेषतः ॥ ८२ ॥
मन्दारपुष्पशय्यासु सुखं तेनान्वभावि यत् । एतत्कठोरभूपीठलोठैःनिर्लोठितं हठात् ॥ ८३ ॥
दिव्यमाभरणं यस्य विभाति स्म नवं नवम् । कटौ पटच्चरं तस्य नटति स्म गतस्मयम् ॥८४॥
अभूच्चङ्क्रमणं यस्य मसृणे मणिकुट्टिमे । स वैश्वानररथ्यासु बम्भ्रमीति त्वसम्भ्रमी ॥ ८५ ॥
राजदारा इवासूर्यंपश्या यस्याभवत्तनुः । ध्वजा रविरथस्येव न च्छायामृच्छति स्म सा ॥ ८६ ॥

---

१ "बावन्नुं चन्दन" "चर्चा तु स्याद् विलेपनम्" सुवर्णे गैरिकघट्टनेऽतिशोभा स्यात् इति हेतोः कीटलोहतां ऊहे धृतम् । २ कान्तीलोहभाजनम् । कान्तीलोहभाजनोऽग्नितापेन दुग्धमुत्फणतीति लोकोक्तिः । ३ अनुभूतम् । तत्सुखम् । लुण्ठनैः । बलात्कारेण । ४ "जीर्णवस्त्रं पटच्चरम्", गताहङ्कारं क्रियाविशेषणम् । ५ सुकुमालरत्नबद्धभूमौ । ६ अग्निसमानमार्गेषु । नोत्सुकः । ७ न सूर्यं पश्यन्तीति असूर्यंपश्याः । दृशृं प्रेक्षणे; न सूर्यं पश्यन्ति "असूर्योग्राद् दृशः"॥५।१।१२६॥ इति सूत्रेण खश् । "खित्यनव्यय-"॥३।२।१११॥ इति मोऽन्तश्च । सूर्यरथस्य ध्वजा "छांहडीं" न गच्छति । ॐ भूपीठालोठैरिति पाठान्तरम् । भूपीठे इत्यपि पाठः ।

कल्पद्रुमफलास्वादः सदा यस्य वशंवदः[1] । अटाट्यते प्रतिकुटं[2] स भिस्साभिस्सटाकृते ॥ ८७ ॥
दिव्यामृतरसैर्नासीद्या प्रीतिः स्फीतिशालिनी । शास्त्रविज्ञैः[3] कदन्नैः सा तस्याभूद्यापनाकरैः ❀ ॥ ८८ ॥
दूना या नासिकाऽमुष्य राज्ञः परिमलैरपि । सेहे श्मशानगन्धं सा धूपनीमिव रोगिणः ॥ ८९ ॥
बीभत्स[4]वस्तुदुर्गन्धैरसौ कल्याणसाधकः । दुर्गन्धाया मृदो गन्धैर्धातुवादीव पिप्रिये[5] ॥ ९० ॥
दिव्य[6]नाट्यनटीनाट्यालोकैरभ्यासमीयुषी । मन्ये दृगप्यभूत्ताद्दृग् नासावंशाग्रनर्त्तकी ॥ ९१ ॥
दृग्प्रीत्यै यस्य कर्पूर[7]पाञ्चाल्य इव वल्लभाः । आसन्नुत्सङ्गसङ्गिन्यस्तदाऽस्य पृषताङ्गनाः[8] ॥ ९२ ॥
वचांसि स्वामिसत्ताया अर्शांसि किल कर्णयोः । जनन्या अपि यस्याशु व्यथां पप्रथिरेतराम् ॥ ९३ ॥
कटूत्कटारटच्चेटीकोटीराटिविघट्टनाः । सुधाचुण्टीघटाघाटास्तस्याटाट्यासु जज्ञिरे ॥ ९४ ॥

---

१ स्ववशः । २ प्रतिगृहम् । "भिस्सा दीदिविरोदनः" तस्य भिस्सटा दग्धिका "ऊषरावडि" । ३ पिण्ड-विशुद्ध्यादिशास्त्रख्यातैः । कुत्सितान्नैः । देहनिर्वाहतत्परैः । ४ गन्धकादिभिः, शालिः । मोक्षस्य; पक्षे सुवर्णस्य । ५ प्रींग् तर्पणे, परोक्षा, ए, द्वित्वादि । ६ देवसंबन्धिनाटकरम्भादयस्तासां नाट्यम् नर्तनम् । ७ पूतल्यः । ८ मृगाङ्गनाः । ९ अमृतवापीसमूहसमाः । गोचरचर्यासु । ❀ परैरिति पाठान्तरम् ।

उत्तुण्डचण्डफेरुण्डा मण्डिताखण्डमण्डलाः । तस्य स्फीतरुताः कान्तासङ्गीतान्ति वनान्तरे ॥९५॥

निःशूकघूकघूत्कारा भैरवीभैरवारवाः । अस्य सत्पथपान्थस्य सर्वतः शुभसूचकाः ॥ ९६ ॥

अवावरी मतिर्दोषान् शालेः प्रशमधीवरी । पीवरी श्रुतपीयूषं परमार्थैकदृश्वरी ॥ ९७ ॥

अदण्डधारिणा चित्रं सप्तधातून् सुसाधकौ । तपसा पारदेनावर्त्तयामासतुराशु तौ ॥ ९८ ॥

प्राज्यैर्भोज्यरसैः षड्भिर्दृप्ताः सप्तापि धातवः । शृङ्गाराद्याश्च तैरष्टौ ताभ्यां त्यक्ताः षडप्यतः॥९९॥

वर्णश्लोकार्थदूरस्थं मासक्षपणमेतयोः । अभिष्वङ्गलगद्रङ्गविन्दुच्युतमिवाभवत् ॥ १०० ॥

अनाहारव्ययैर्मासक्षपणैः कृपणैरिव । चक्रे स्फारं तपःसारं गेहं देहं कृशं भृशम् ॥ १०१ ॥

---

१ उत्पादितमुखवच्चण्डशृगाल्यः, मण्डितं संपूर्णं याभिस्ताः, वृहद्रवाः, कान्तासङ्गीतमिवाचरन्ति । २ ओणृ अपनयने; औणति दोषान्; प्रशमं दधाति इति प्रशमधीवरी । पीङ्च् पाने इति पीवरी । पश्यतीति दृश्वरी। ३ यो हि पारदः शोधितः सन् मध्ये दण्डं ऊर्ध्वं बिभार्ति सप्तधातून् शोषयति । ४ षड्भिः रसैः सप्त धातवो दृप्तास्तैः सप्तधातुभिरष्टौ शृङ्गाराद्याः, अतः षडपि ताभ्यां त्यक्ताः । ५ " नो किञ्चिवन्नसद्दसिलोग- " इत्यागमः; पक्षे यशोऽर्थकान्तिदूरस्थम् । उत्प्रेक्ष्यते बिन्दुच्युतालङ्कारोऽयम् । तर्त्कि नह्येतन्मासक्षपणं किन्तु मांसक्षपणमित्यर्थः । ६ आहारव्ययो नास्ति येषां तैः । तप एव सारं द्रव्यं स्फारं चक्रे ।

एकाद्वित्रिचतुर्मासक्षपणै[1]रापणैरिव । [2]अगण्यपुण्यपण्यानि क्रीणीतः स्म गतस्मयौ ॥ १०२ ॥
ततो भद्रमहाभद्रसर्वतोभद्रसंज्ञिताः । यवमध्या वज्रमध्याः [3]प्रतिमा आरराधतुः ॥ १०३ ॥
[4]उग्रादरात्तपस्याऽथ तावनाशंसिता भृशम् । हृतमांसासृजौ चक्रे [5]गौरी भृङ्गिरिटिं यथा ॥ १०४ ॥
सदा निष्कोषसंबन्धं निर्व्यापारं सुनिर्मलम् । अहिंस्रं तत्तपस्तीव्रं खड्गधाराधिकं बभौ ॥ १०५ ॥
[6]पवनाभ्याससुस्थात्मा त्रेताऽधिकबलोदयः । अक्षप्राणापहारी च हनूमांस्तत्तपःक्रमः ॥ १०६ ॥
[7]अकुण्ठोत्कण्ठया सिद्धेरिव क्षामवपुष्टमौ । मुनी मोहेभफालायां सिंहौ संकुचिताविव ॥ १०७ ॥
मलाविलौ बहिष्कीर्णपापपङ्कौ विभावितौ । [8]संयमश्रीपरीरम्भासक्तकस्तूरिकाङ्कितौ ॥ १०८ ॥

---

१ हट्टैः । २ धर्मक्रयाणकानि । ३ एताः सर्वाः प्रतिमाविशेषाः । ४ उग्रं तीव्रम् ; तपः पक्षे उग्र ईश्वरः । तपस्या दीक्षा । अप्रशंसिता । ५ गौरी पार्वती; ईश्वरसेवकम् । ६ पवनस्य जनयितुरभ्यासं समीपं, तेन सुस्थः आत्मा यस्य । द्विजसत्काग्नित्रयस्य त्रेतेति नाम, तस्याग्नित्रयादधिकं बलं तस्य उदयो यस्य । अक्षो रावणपुत्रः । तस्य शाले:; तपसः क्रमः परिपाटी । ७ वर्यवाञ्छया । मुक्तेः । आतिशयेन वपुः वपुष्टमम् । तमप्रत्यये षत्वे च रूपम् ; क्षामं कृशं वपुष्टमं महावपुर्ययोस्तौ कोऽर्थः अतीव क्षामवपुषौ । ८ अन्तःक्षिप्त० । आश्लेष० ।

स्मरचौरभयाभावाद्[1]गन्तव्याल्पतयेव वा । मन्[2]थरं पथि निर्ग्रन्थौ चारु चेरतुरीर्यया ॥ १०९ ॥
अ[3]ल्पाक्षोपाङ्गशीलाङ्गभृताङ्गशकटस्य किम् ? । चीत्कारः कीक[4]शारावस्तयोश्चङ्क्रमणक्रमे ॥११०॥
द्वा[5]दशात्मप्रभासारं तपो द्वादशभेदभृत् । द्वादशाब्दीं समाराध्य धृतद्वादशभावनौ ॥१११॥
श्रीमता वीरनाथेन साहितौ रहितौ मदैः । स[6]मेतौ समितिप्रष्ठौ पुना राजगृहं पुरम् (युग्मम्)॥११२॥
जननी जन्मभूमिश्च प्रिया[7] सामान्यजन्मिनाम् । जन्मभूमिः कथं प्रीत्यै ह्रियै जन्मैव यत्तयोः ॥
लोकानां स्[8]वजनग्रामसीमाऽऽलोकः सुखायते । विश्वाऽपि सदृशी विश्वा जगन्मित्रतया तयोः ॥११४॥

---

१ गमनं, तस्य स्तोकतया, इव उत्प्रेक्षाद्योतकः । २ मन्दं; कथं चारु । ३ अल्पः स्तोके, अक्षस्य धुर्याः, उपाङ्गं "ऊंगणुं"। अक्षाणि इन्द्रियाणि० । उपाङ्गानि १८०००; शीलाङ्गरथभृतः शरीरशकटस्य । ४ अस्थिरवः । ५ द्वादशात्मा च हेलिस्तस्य कान्तिः । ६ आगतौ । ईर्याभाषैषणादाननिक्षेपोत्सर्गाभिः समितिभिः प्रधानौ अग्रेसरौ वा । ७ अभीष्टा । यतः शास्त्रेऽप्युक्तमस्ति–"जणणी, य जम्मभूमी, पच्छिमनद्दा, सुहासियं वयणं ॥ मणइट्ठं माणुस्सं पञ्च वि दुक्खे ण मुञ्चन्ति" ॥ १ ॥ ८ स्वजनाश्च ग्रामश्च सीमा च तयोर्दर्शनम् । सकलाऽपि "विश्वा विश्वम्भरा धरा" इति वचनात् ।

अथ श्रीवीरनाथोऽपि सुमनः[1]श्रेणिसेवितः । अवाततार वैभारगिरिश्रृङ्गे वसन्तवत् ॥ ११५ ॥

त्रिप्राकारपरीवेषं त्रिलोकीतिलकोपमम् । अध्यासामास समवसरणं रत्नवा[2]द्विभुः ॥ ११६ ॥

ततोऽहंपूर्विका[3]पूर्वमपूर्वमिव सेवितुम् । जना जिनं समासेदुः श्रीमन्तं स्वजना इव ॥११७॥

इतश्च तौ मुनी मान्यौ शब्दार्थाविव[4] सङ्गतौ । परमार्थाय[5] पर्यासौ साधुवृत्तविशेषकौ ॥ ११८ ॥

अनुत्सुकावनुत्सेकौ[6] मासक्षपणपारणे । श्रीसर्वज्ञमनुज्ञायै प्राप्तकालं प्रणेमतुः ॥ ११९ ॥

आदिदेश जिनाधीशः शालिभद्रं विलोकयन् । यत्सवित्री[7] भावित्री ते वत्स ! पारणकारणम् ॥१२०॥

तमथादाय निर्देशं सुमनोमार्गदीपकः[8] । समं धन्येन सञ्चेरे स दिनेन दिनेशवत् ॥ १२१ ॥

मृष्टं वैद्योपदिष्टं च मम सङ्घटते पुरा । निर्ममो नैवमप्यन्ते[9]र्विममर्श विमर्शवान् ॥ १२२ ॥

---

१ वसन्तपक्षे तु सुमनांसि पुष्पाणि । श्रीराजगृहात् पूर्वस्यां दिशि वैभारगिरिः । २ रत्नानि विद्यन्ते यास्मिन् तत् रत्नवत्, वतिप्रत्यये रूपम् । ३ अहं पूर्व २ यस्यां सा अहंपूर्विका । कथं अहंपूर्विका पूर्व प्राप्ता । ४ वागर्थाविव मिलितौ । ५ मोक्षाय कृतादरौ । साध्वाचारतिलकौ । ६ स्वस्थौ, निरहङ्कारौ । ७ माता भाविनी । ८ सूर्यपक्षे आकाश-पथदीपकः । ९ मनसि ।

मोहसैन्यामिवात्यन्तं परावृत्तिपरौ पुरम् । दक्षौ प्राविक्षतां साक्षाद्धर्मभूभृच्चराविव ॥ १२३ ॥
नामर्षेण न मर्षेण* विस्मयेन स्मयेन न । व्रीडयाऽपीडया स्पृष्टौ संस्तवेन स्तवेन न ॥ १२४ ॥
सगोत्रैर्भित्तिचित्रैर्वा दक्षैर्वृक्षैरिवायतौ । सवयोभिर्वयोभिर्वा न कैश्चिदुपलक्षितौ ॥ १२५ ॥
श्रीपथे संचरन्तौ तौ श्रीमहावीरवाग्बलात् । भद्राप्रासादमेवाशु रागदुर्गमिवेयतुः ॥१२६॥
वैडूर्यद्युतिदूर्वासु मुक्तमुक्ताकणोत्करे । बंभ्रमीति न तद्दृष्टिगवी पङ्गुरिवाङ्गणे ॥ १२७ ॥
आत्मीय इति सस्नेहं सपूर्व इति सादरम् । रुग्णः कापीति साशङ्कं तादृगेवेति सस्पृहम् ॥१२८॥
आः शून्य इति सोद्वेगं त्यक्तोऽयमिति सस्मयम् । आलुलोकेऽपि नानेन स्वप्रासादावतंसकः (युग्मम्)
इतः स्थितमिह भ्रान्तमत्रासितमिहाशितम् । रिंगमङ्कुरयत्येवं शून्याऽपि हि विलासभूः ॥१३०॥

---

१ धर्मनृपहेरिकाविव प्रविष्टौ; पक्षे "पालवटउं" । २ ईडा स्तुतिः । सम्यक्परिचयेन । ३ स्वजनैर्भित्तिचित्रैरिव । ४ दक्षैर्वृक्षैरिवाचेतनत्वात् । ५ सुहृद्भिः पक्षिभिरिव । सर्वत्र वाशब्द इवार्थे । ६ राजवर्त्मनि "प्रासादो देवभूतानाम्" । ७ श्रीशालिधन्यदृग्गौः । ८ रुजोंत् भञ्जे; भग्न इत्यर्थः । ९ सप्तमभूमिप्रासादः । १० भुक्तम् । ११ स्नेहम् । * हर्षेणेति च पाठः ।

घनागमैः प्रथितया प्रतिभाति स्म तस्य तु । तरङ्गिण्या समतया सर्वमेव समीकृतम् ॥ १३१ ॥
अतीत्याङ्गणवेदीं तामामितां ममतामपि । अन्यभिक्षाचरौचित्या तस्थतुः सुस्थितौ पुरः ॥१३२॥
प्रददे धर्मलाभाशीः किन्तु नोच्चैर्न सादरम् । दर्शिता दर्शनाचारविचारे चातुरी परम् ॥१३३॥
विवर्णौ चित्रलिखितौ निर्लेपौ लेपनिर्मितौ । अतुल्यौ धर्मसौधस्य तुल्यकुड्याविव स्थितौ ॥१३४॥
नैकं पदं पुरोऽभूतां पदमेकं च नोचतुः । सर्वार्थसिद्धिदं मौनमेतावेकपदेऽकृताम् ॥ १३५ ॥
पल्लवी सल्लकीस्तम्भः सद्मभारधरोऽप्यलम् । रसासङ्गेन जायेत तथा शीलाङ्गभागपि ॥ १३६ ॥
साधुः स्वजनसंसर्गोद्भवेद्रागाङ्कुरोद्धरः । तयोः परं रसावेशान्न भेदः कीरदारुवत् ॥ १३७ ॥
तथा मनोवचःकायैः परावृत्तिरभूत्तयोः । यथा स्वगृहजैर्मोहस्नेहरागैर्न लक्षितौ ॥ १३८ ॥

---

१ सिद्धान्तैर्मेघैश्च । समतातरङ्गिणी । विख्यातया । पक्षे विस्तीर्णया । २ केवलम् । ३ अकृतामिति क्रियास्थाने अकार्ष्टामिति भवति इति संभाव्यते । ४ पल्लवा विद्यन्ते यस्य स पल्लवी, अत इन् । " सल्लकी तु गजप्रिया " । ५ पृथ्वीयोगेन । ६ कीरकाष्ठवत् । ७ " पालवटओ " ।

पुत्रिकापुत्रजामातृश्रीवीरागमजैरितः[*] । कोष्ठागतैश्चतूरूपैर्हर्षपूरैः प्रपूरिता ॥ १३९ ॥
ध्यानान्तरतरुच्छेदच्छेका भद्रातरङ्गिणी[2] । रसैश्चिरैण्टिकाचुण्टीरप्यपूरयदञ्जसा[3] (युग्मम्) ॥१४०॥
अचिन्तयच्च दिष्ट्याऽद्य भाग्यैर्जागरितं मम । आययौ[4] श्रीमहावीरस्त्रिलोकीतिलकोऽत्र यत् ॥१४१॥
अन्यच्च मम सर्वस्वं मम जीवितजीवितम् । वत्सः श्रीशालिभद्रश्च सांयात्रिक[5] इवागमत् ॥ १४२ ॥
सौधस्य सुतशून्यस्य द्वादशः परिवत्सरः । विस्मृतं मुखमप्यस्य न च[6] भद्रा न जीवति ॥ १४३ ॥
त्यक्तताम्बूलकल्पेऽत्र भाव्यन्ते शालिवैभवे । कर्पूरपारिकाकारा[7] रङ्गरेखाजुषः स्नुषाः ॥ १४४ ॥
विना पतिं च पुत्रं च वंशोवाहो[8] निरङ्कुशा । सुखं निद्रायते भद्रा निष्कृपा निरपत्रपा ॥१४५॥
सा शालिजननीत्वेन संभाव्ये कोविदैः कथम्[9] । याऽहं शस्येषु गण्याऽपि भद्रिकेव हि वातिका[†] ॥

१ रसध्याने निष्ठागतैः । २ भद्रा एव नदी । ३ वध्व एव कूपिकाः रसैः परिपूरिताः । ४ आगतः । ५ पोतवणिक् । ६ द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायात् जीवति भद्रा । ७ घनसारफडशतुल्याः । ८ हस्तिनीव निस्त्रपा । ९ कथं कष्टम् । * –ः तव इति पाठान्तरम् । † भद्रिकेवातिवातिका इत्यपि पाठः ।

शिरीषसुकुमाराङ्गी नन्दना मे सुयौवना । सासह्यते व्रतं कष्टं निदाघमिव पद्मिनी ॥ १४७ ॥
अहं जराऽभिभूताऽपि दुःखैरपि सुखैरिव । वि[1]प्लाविता शिवाऽन्धेव कुलिकैर्वरदोद्भवैः ॥ १४८ ॥
भद्रं तस्याः सुभद्रायाः शालिभद्रस्वसुर्यया । व्रतेनैकेन सत्येनानुगतौ वरसोदरौ ॥ १४९ ॥
स्त्रीणां भ्राता च भर्ता च शृङ्गारौ भुवि दुर्लभौ । तस्याः किमुच्यते यत्तौ श्रीवीरेण विशेषितौ ॥
रूपश्रिया [2]जयन्तीव वैजयन्ती निजान्वये । सा मे सुता समायाता शीलशै[3]लेशचूलिका ॥१५१॥
धन्यः सुतापतिर्धन्यः स नमस्यो [4]महाव्रती । रेजेऽ[5]ष्टाभिः प्रियाभिर्यो मूर्त्ताभिरिव मूर्त्तिभिः॥१५२॥
[6]सङ्गतं सङ्गतं निस्सङ्गतं मेऽद्य कुटुम्बकम् । सुप्रभातं प्रभातं तत्स्ववशे [7]श्वोवसीयसम् ॥ १५३ ॥
वि[8]भाव्यैवमसंभाव्यप्रमोदभरभास्वरा । भद्राऽवादीद्विनिद्राऽऽस्या जननीव जनीजनम् ॥१५४ ॥

१ विप्रतारिका । अन्धा शृगाली । " बदरेणापि हि प्रभवेत् शृगालस्य महान् महः० " । २ जयन्ती इन्द्रपुत्रिका; ध्वजा । ३ मेरुचूलिका । ४ महामुनिः; पक्षे रुद्रः । ५ "क्षिति १ जल २ पवन ३ हुताशन ४ यजमाना ५ ऽऽकाश ६ चन्द्र ७ सूर्या ८ ख्याः " इति अष्टौ मूर्तयः । ६ मिलितं, युक्तम्, निरीहम् । ७ श्वोवसयिसं कल्याणं स्ववशे जातं । ८ अवबुद्ध्य । प्रचुरहर्ष० । प्रफुल्लाऽऽस्या । वधूजनम् ।

वत्सा वधू[1]टिकाः! कल्पकोटिकल्पा विकल्पिता। युष्माभिर्द्वा[2]दशाब्दीयं दुर्लभे प्राणवल्लभे ॥१५५॥

यु[3]ष्मद्ध्यानैः स्फुरद्वातैः किं मनोरथिकैरिव?। महापोत इवानिन्ये दूरदेशान्तरात् प्रियः ॥१५६॥

त[4]दद्य सोद्यमा यूयं पुरा परिचितं चिरात्। शृ[5]ङ्गारमनुगृह्णीत विनीतमिव सेवकम् ॥ १५७ ॥

द्रुतं सै[6]वनपीठं लद्यात स्नातानुलिम्पत। अ[7]लङ्कारानलं कारागृहादद्य विमुञ्चत ॥ १५८ ॥

इति श्वश्रूनिदेशात्ता उच्चरोमाञ्चकञ्चुका। देहे गेहेऽप्यसंमान्त्यस्तदा त[8]त्वरिरेतराम् ॥१५९॥

तदाऽऽदिष्टः❀ सुसंतुष्टः परीवारोऽप्यवारितः। अन्योन्यं पूर्णपात्रार्थी ह[9]र्षसांराविणं व्यधात् ॥१६०॥

---

१ वध्वः; वर्षकोटिसदृशा वितर्कयामासुः। २ द्वादशानामब्दानां समाहारः। अब्दानि वर्षाणि। ३ अर्थात् शालिध्यानैः। वातुभिः। शकटम्। शाकटिकैः। प्रवहणमिव। आनीतः। ४ तस्मात् कारणात्; सोद्यमाः सत्यः। प्रागनुभूतम्। ५ शृङ्गारं पट्टदुकूलादिमण्डनम्। यथा कश्चिद् विनीतं किङ्करं पुनः गृह्णाति। ६ स्नानपीठम्। स्नानं कुरुत। ७ मण्डनान्, गुप्तगृहात्; अलमत्यर्थम्। ८ शीघ्रतरा जाता इत्यर्थः। ९ "उत्सवेषु सुहृद्भिर्यद् बलादाकृष्य गृह्यते। वस्त्रपात्रादि तत्पूर्णपात्रं पूर्णानकं च तत्" ॥१॥ इति नाममालातो हर्षेण समन्ताद् रावः सांराविणम् "अभिव्याप्तौ-" ॥५।३।९०॥ इत्यनेन ञिनि "नित्यं ञिनोऽण्" ॥७।३।५८॥ इत्यनेन नित्यमण्। ❀ तयेति पाठान्तरम्।

प्रमोदसागरे तत्र कल्लोला इव किङ्कराः । एहिरेयाहिरांचक्रुर्नृत्यन्तोऽत्यन्तचञ्चलाः ॥ १६१ ॥

सत्वरं तत्र यास्यामि दास्ये तस्य प्रदक्षिणाम् । साधुमण्डलसारस्य ह्रीङ्कारस्येव वेष्टनाम् ॥ १६२ ॥

वन्दनेन मुनेस्तस्य चन्दनेनेव निर्भरम् । संतापमपनेष्यामि [2]कुटुम्बायोगरोगजम् ॥ १६३ ॥

कपोलपालि[3]लालित्ये नेत्रराजीवराजिते । वेल्लद्भ्रूवल्लिके भालस्थले तन्मुखपल्वले ॥ १६४ ॥

चिरं मरुकुरङ्गीव मम दृष्टिः पिपासिता । लावण्यसलिलं धीरा [4]मनोहृत्य प्रपास्यति (युग्मम्) ॥ १६५ ॥

पुत्र[5]मामन्त्रयिष्येऽहं दिव्याहारेण लालितम् । अपि मर्त्योचितैरन्नपानैर्ग्रा[6]म्येव नागरम् ॥ १६६ ॥

एवं मनोरथरथव्यूहो[7]द्धूतरजश्चयैः । निरुद्धनयनेवाम्बा नालुलोके सुतं मुनिम् (षड्भिः कुलकम्) ॥ १६७ ॥

यथा निधानं निष्पुण्या दायं द्यूतोद्यता निजम् । [8]हन्त भ्रान्ता न पश्यन्ति दुर्दैवनिहताशयाः ॥ १६८ ॥

---

१ शालेः । २ कुटुम्बवियोगरोगसंभवम् । ३ ललितस्य भावो लालित्यम् । राजीवानि कमलानि । वेल्लन्ती चपला भ्रूरेव वल्लिर्यस्मिन्; अखातं सरः । ४ तृप्तिसूचकम् । ५ निमन्त्रयिष्ये । ६ ग्राम्या स्त्री । "तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि" इत्यादि । नागरिकम् । ७ उत्पाटितम् । ८ हन्तेति खेदे ।

ध्यानधाराधिरोहेऽपि भद्रा भद्रविनाकृता। तथा संभावयामास गृहाङ्गणगतौ न तौ (युग्मम्)॥१६९॥
संभूय ललनाः शालेर्जगदुर्जगदुत्तमाः। विरहः सुसहः प्राणप्रिये प्रायः प्रवासजः ॥१७०॥
एकग्रामप्रवासस्तु मरणादपि दुःसहः। प्रियालोकेऽपि सोऽस्माकं सांप्रतं न प्रयास्यति ॥ १७१ ॥
यद्वयं निजनाथस्य स्वपाणिकमलार्चने। देवस्येवापवित्राङ्गा दूरिताः पापपूरिताः ॥ १७२ ॥
हृदि प्रातिनिधिः[1] स्नात्रप्रतिमेव जिनेशितुः। श्रीमूलनायकस्यास्य स्नाप्या हर्षजलैर्यदि ॥ १७३ ॥
समं चेत्प्रव्राजिष्यामः प्राणेशेन तदा मुदा❀। नाऽभविष्यत्तदा लोकापवादैः सुखखण्डना ॥ १७४॥
वयं संप्रति पद्मिन्यः सद्मदुःखजलाशये। पत्युः शूरस्य सत्त्वेव न संवासः पुनर्यतः ॥ १७५ ॥
इति हर्षाश्रुसंपृक्तविरहानलजैरिव[2]। ध्रुवं धूमैर्विधुरिताः कान्ता ददृशिरे न तम् ॥ १७६ ॥
तपःश्रिया वल्लभया पूर्वकान्ताभयादिव। मन्ये प्रचण्डयोगिन्या निन्ये स किमदृश्यताम्? ॥१७७॥
तन्नाममन्त्रमेवाभिर्जञ्जपूकाभिरप्यहो। न वरः प्राप्यऽसस्वाभिर्देवीवर इवागतः ॥ १७८ ॥

१ प्रतिबिम्बम्। २ अन्यदपि ज्वलत्काष्ठं नीरेण विधाप्यते तदा तस्माभिःसरति। ❀ अमुनेति पाठान्तरम्।

तेन कायस्तथा चक्रे क्षामः प्रतिपादिन्दुवत् । यथा नादर्शि कान्ताभिरुषारूपाभिरप्यहो ॥१७९॥
अवस्थाय प्रतस्थाते तत्र सौधक्षणे क्षणम् । साधू अगाधमाध्यस्थ्यसुधाऽम्भोनिधिसिन्धुरौ ॥१८०॥
स्वाम्यादेशात्तमावासं विशतोरथ निर्यतोः । राज्याभिषेककाले श्रीरामलक्ष्मणयोरिव ॥ १८१ ॥
समचित्ततया हन्त क्ष्मापुत्र्या सशोभयोः । प्रकारः कोऽपि नाकारविकारस्य तयोरभूत् (युग्मम्)॥
क्व सा नृपतिमानेऽपि दुःखदा सुकुमारता । क्व मातुरपमानेऽपि सुखदा तु कठोरता ॥ १८३ ॥
मा भूवन् सांप्रतं रागाङ्कुरा नीरसयोस्तयोः । चित्रं नादीपि कोपाऽग्निर्यत्तदा शुष्ककाष्ठयोः ॥१८४॥
अतिस्निग्धं जगन्मैत्र्या मनः किं युग्मिकालवत् ?। निर्ममत्वेन किं चाऽतिरूक्षं प्रान्तारवत् तयोः ॥

---

१ उषा दोषेन्दुकान्तागोप्रशुभ्रकलत्ररूपाभिः । पक्षे गोरूपाभिः । यत उक्तम्–" प्रतिपच्चन्द्रं सुरभिर्नकुलो नकुलीं पयश्च कलहंसः । कृष्णकवल्लीं पक्षी सूक्ष्मं धर्मं सुधीर्वेत्ति" ॥ १ ॥ २ कुञ्जरौ । ३ पक्षे सीतया । ४ "आहूतस्याभिषेकाय विसृष्टस्य वनाय च । न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः " ॥ १ ॥ ५ सुषमकालवत् । ६ दुःषमसुषमषष्ठारवत् ।

संयमात्यन्तिकरतेः स्वर्ग[1]सर्गायितं किमु ?। आविर्भावयतः प्राप नात्र द्वेपवृ[2]षाकपिः (युग्मम्) ॥१८६॥

स्थानान्तरानपेक्षौ तौ संवेगान्मु[3]निपुङ्गवौ । वबलाते शिरःस्थायिस्वाम्याज्ञार[4]श्मिराजितौ ॥१८७॥

नि[5]रीयमाणयोः पुर्याः काचिन्मथितहारिका । तयोः संमुखमायासीद्दाधिपात्रावलीं द[6]धिः ॥१८८॥

सा विद्यैव सदाभ्यासा वृद्धभावेऽपि सस्फुरा । सतां मतिरिवात्यन्तं परिणामसुनिर्मला॥ १८९ ॥

प्राज्यसौराज्यसन्नीतिरिवादण्डकरग्रहा । अहीनक[7]रणस्थैर्यसिद्धव्यापारगौरवा ॥ १९० ॥

[8]कात्यायनी निभाल्याथ सा युक्तं ब्रह्मचारिणम्। दधती विस्मिते नेत्रकुमुदे मु[9]मुदेतराम् (विशेषकम्)॥

सा प्रा[10]चीव रविं प्राप्य विकस्वरमुखाम्बुजा । अमन्दानन्दपूर्णाङ्गी चिन्तयामास चेतसि ॥१९२॥

---

१ सृष्टि० । २ वृषाकपिरग्निः । ३ मुनिवृषभौ; पक्षे पुङ्गवौ प्रधानवृषभौ । ४ पक्षे रज्जुः । ५ निर्गच्छतोः । "महिआरी" । ६ दधातीति दधि' । ७ पञ्चेन्द्रियस्पष्टत्वेन सिद्धो व्यापारो यस्याः । ८ गोरी; पक्षे अर्द्धवृद्धनारी च । ब्रह्मचारिणं कार्तिकेयं मुनि च । ९ अतिशयेन मुमुदे मुमुदेतराम् । तरप्रत्यये कृते ईदृग् रूपम् । १० पूर्वदिगिव ।

सुधाऽन्धुः[1] किमयं बन्धुः सुन्दरः सोदरः किमु। आशाव्यासनिवासाय दिग्गजः किं ममाङ्गजः? ॥१९३॥
किं वाऽहं राज्यमापन्ना किं वाऽहं स्वर्गमागता। किं वा प्रमोदमेदस्विदुग्धाब्धिजल[2]मानुषी ॥१९४॥
आत्मानं नाभिजानामि नाभिजानामि कोऽप्ययम्। किं त्वेवमभिजानामि पर्व सर्वोत्तमं मम ॥१९५॥
एवमस्या विकल्पालीप्रणालीमार्गलालितम्। हर्षाम्बुनेत्रमार्गेणापूरयत् क्षेत्र[3]भूमिकाम् ॥ १९६॥
सर्वाभिसारः स्नेहस्य स्तनयोः क्षीरकन्दयोः। प्रससार पयःपूरस्ततस्तस्याश्चि[4]रादपि ॥ १९७॥
भूमिष्ठे सकले देवे दुग्धं क्षरति गौर्यथा। अज्ञातेऽपि तथा पुत्रे प्रस्नुता साऽप्य[6]संस्तुता ॥१९८॥
तत्र व्यतिकरे धर्म[7]सर्गादौ मुनिदर्शनात्। दुग्धं ववर्ष सोत्कर्षं क्षीरकादम्बिनीव सा ॥ १९९॥
व्यजिज्ञपच्च सा दानाशया शालिं शुभाशया। भवतः किं किमातिथ्यं प्र[8]थये नाथ! निर्द्धना? ॥२००॥

---

१ अमृतकूपः। २ जलवासिनी स्त्री। ३ शरीरभूमिकाम्। ४ वृद्धभावेऽपि। ५ सप्रभावे। ६ अपरिचिताऽपि। ७ धर्म एव सर्गः सृष्टिः। सृष्ट्यादौ हि दुग्धमेघा वर्षन्ति। दुग्धमेघमालेव। ८ विस्तारयामि।

-तथापि नाथ! नीथे यत् सत्पथे पान्थ! ते शुभम्। शकुनं दधि तद्वीर! गृहाणानुगृहाण माम्॥
इत्युदीर्य प्रदायासौ दधिभिक्षां मुमुक्षवे। धन्यंमन्या मुदाऽनंसीच्चञ्चद्रोमाञ्चकञ्चुका॥२०२॥
दुग्धमेघायिता पूर्वं महामेघायिताऽश्रुभिः। दधिमेघायिता दानात् सुधामेघायिता गिरा॥२०३॥
संसिच्य पुण्यबीजानि यथास्थानमियाय सा। साधू सर्वोपधाशुद्धं तदेवादाय जग्मतुः॥२०४॥
श्रीवीरं प्रणिपत्येर्यापथिकीपूर्वकं ततः। शालिः प्राह मम स्वामिन्! पारणं मातृतः कथम्?॥२०५॥
आदिदेशाथ सर्वज्ञः शालिभद्र! महामुने!। प्रागजन्मजननी वत्स! तत्रेयं दधिदानकृत्॥२०६॥
पुरा नाम्नैव धन्याऽऽसीत् शालिग्रामनिवासिनी। सैव सत्याऽधुना जाता भवतो दधिदानतः॥२०७॥

स्वरूपं श्रीवीरात्तदिदमखिलं पूर्वभवजं
निशम्य श्रीशालिः प्रबलतरवैराग्यकलितः।

---

१ वाञ्छामि। २ मुनये। ३ णमं प्रह्वत्वे। ४ प्रस्रवनेन। ५ सर्वप्रकारशुद्धं; दधि। ६ नमस्कृत्य। ७ भद्रायाः। ८ धन्या।

प्रयोक्ष्ये भोज्ये त्वां दिवि बहिरिति प्रेक्ष्य च मनः[1]

स धन्यः कायस्य स्थितिरियमतः पारणमधात् ॥ २०८ ॥

विशालां श्रीशालेः कथमहमिह स्तौमि समतां

[2]जैनन्यायादुच्चैरिव निजजनन्याऽपि जनितैः ।

असंमानैरेतैरशनिनिशितैः पश्य पतितै-

रपि क्षीराम्भोधिर्ज्वलति विगलत्येव हिमवान् ॥ २०९ ॥

[3]क्ष्माभृतः प्रापुरिहापमानाशनिप्रहारैर्निजपक्षहानिम् ।

असौ तु साम्यामृतसिन्धुशायी मैनाकवन्नाकलयांचकार ॥ २१० ॥

पूर्वं पायसशम्बलेन तनयं निन्ये कुलं तादृशं

पश्चाद् गोरसशम्बलेन किल या सर्वार्थसिद्धिश्रियम् ।

---

१ मनसा विना भुक्तमित्यर्थः । २ लोकन्यायात् । ३ पर्वताः; कर्तृपदम् । अब्धिमध्ये वज्रप्रवेशाभावात् ।

धन्या सैव जनन्यतः परतरां भद्रामभद्रामथो
नो मन्येऽन्तरवासकेऽपि वसतो मातेति यद्गीः सताम् ॥२११॥



श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नधिया शुद्धे षष्ठोऽयं प्रक्रमोऽभवत् ॥ २१२ ॥

## इति श्रीशालिलीलाकथायां श्रीशालिभद्रविहारमातृगृहागमनपारणा-वर्णनो नाम षष्ठः प्रस्तावः ॥

श्रीशालेः साधुमूर्द्धन्यामनुत्तरफलोदयाम् । विचारयन्तु चतुरा मङ्गल्यामक्षतश्रियम् ॥ १ ॥
अथ श्रीवीरवाक्यानां शालिभद्रमुनिः स्मरन् । विममर्श मनस्येवमषडक्षीणमन्त्रवित् ॥ २ ॥

---

१ विमानसर्वोत्तमाम् । पक्षे मोक्षलक्ष्मीम् । २ चतुष्कर्णमन्त्रवित् ।

प्रविश्य गर्भे नेपथ्यं[1] परावृत्त्य पुनः पुनः। नरीनर्त्ति नटः प्राणी केटरे[2] भवनाटके ॥ ३ ॥

कुत्र सा कुक्कुट[3]ग्रामवासव्यासविडम्बना। क मे सुपर्वदेशीयगुणगौराङ्गपौरता? ॥ ४ ॥

पराभवपदं न्यूना सर्वथा कण्टकाशना। सदाभीरीदृगाभीरी माता मैञ्जेव[4] मे पुरा ॥ ५ ॥

इदानीं जननी राजवल्लभादुर्लभान् पुनः। वधूकृत्यविधौ रत्नकम्बलानप्यपीपटत्[5] ॥ ६ ॥

पितुर्नामापि नाज्ञायि तत्र दूरेऽस्तु दर्शनम्। ऐंहिरे[6]याहिराऽकारि गोभद्रेणात्र मत्कृते ॥ ७ ॥

पशुदासस्तदाऽभूवं ग्रामादपि बहिश्चरः। पण्य[7]मज्ञासिषं भूपं त्विदानीं ललितेश्वरः ॥ ८ ॥

कृपालुभ्यः प्ररुदिता परान्नं प्रापयत्प्रसूः। पूर्वं[8] प्रमुदितस्तेन प्राप्तराज्य इवाभवम् ॥ ९ ॥

भवेऽस्मिन् वैभवाभोगानुभावानुभवं निजम्। परस्वाम्यभिधानेन मेनेऽहं वैयाघ्रबालितम्[9] ॥१०॥

अभविष्यत्तदा जन्मनाशो मे ग्रामवासिनः। मदीयभाग्यैर्नायास्यद्यद्यानुपदिको[10] मुनिः ॥ ११ ॥

---

१ वेषम्। जवनिकाम्। २ आश्चर्यार्थे। ३ कुग्रामविस्तार०। ४ अजा इव। ५ पाटयामास। ६ एहिरे याहिरे। ७ क्रयाणकम्। ८ धन्या। ९ व्याघ्रबालाचरितम्। १० पृष्ठलग्नः।

लि०

ध्रुवं यस्याः प्रशस्यायाः सत्त्वसाहाय्यसाहसैः । प्राप्तोऽहमियतीं भूमिमश्वः क्षेत्रगुणैरिव ॥ १२ ॥

सा तद्रूपैव दुःस्था च मम जन्मान्तरस्थितेः । पारणे कारणं जज्ञे वात्सल्यामृततल्लिका ॥ १३ ॥

२३॥ अपाङ्गाङ्गणकोणस्थं शोणभागमिवाहृता । भद्राद्दृष्टिरिहाद्राक्षीन्न मां परिचितं सदा ॥ १४ ॥

न पूर्वया न परया मम मात्राशयाऽद्य तत् । कल्याणाद्रिं जिगमिषोः कार्यमुत्तरकाष्ठया ॥१५॥

प्रयोगमिव निर्वेदवेदस्येति विमृश्य सः । श्रेयःपुरीपथाध्वन्यं धन्यं मुनिमुवाच च ॥ १६ ॥

धन्यानामपि धान्यानामिव दुःखैर्घरट्टकैः । दलितानां भवेत्प्रायो धर्माङ्कुरप्ररोहणा ॥ १७ ॥

धूर्तराजं महामोहं विप्रतार्य पुनर्भवात् । सुधीर्विसाधयामास वर्करेण महावृषम् ॥ १८ ॥

श्रीमद्धर्मसुनासीरनवनासीरवीर ! ते । रागद्वेषादयो दूरे दानवाः सर्वदा नवाः ॥ १९ ॥

विक्रान्तेन त्वया क्रान्तं मोहदुर्गं सुदुर्गमम् । बाढं प्रौढं समारूढा मादृशाः कातरा अपि ॥२०॥

१२ १ पूर्वमातुः । २ शुद्धजातिगुणैः । ३ अम्बया दिशा च । ४ पक्षे उत्तराक्रियया च । ५ ओङ्कारमिव । वैराग्यवेदस्य । पान्थम् । ६ "वेसण" । ७ हास्येन अजापुत्रेण च । ८ पुण्यं; वृषभम् । ९ धर्मेन्द्रसेनाग्रेसरवीर ! । १० दैत्याः । ११ विक्रमयुक्तेन । अत्यर्थम् । भीरवोऽपि ।

सद्यस्तदन्तरङ्गारिचक्रे स[1]मितिनिर्जिते । आवयोर्दधिभोज्येन संजज्ञे वीरपाणकम् ॥ २१ ॥

श्रीगौतमं पु[2]रोधाय श्रीवीराग्रे नृपानिव । तटे कृत्वा कषायांश्च जयश्रीरुपयम्यते ॥ २२ ॥

प्रमोदादभ्यधात् धन्यः शालिः क्वापि न खण्ड्यते । सत्त्वसार ! त्वया सत्या लौकिकी सा कृता श्रुतिः ॥

प्राग्मानस्य न केनापि संयमस्य परीषहैः । नोपसर्गैश्च भावारिप्रहारैस्तेन खण्डना ॥ २४ ॥

शृङ्गारोदारमन्दारमालाभिः किल खेलनात् । अभिमानः परिम्लानिमा[3]नशे मानसे न ते ॥ २५ ॥

[4]स्वःश्रीस्त्वयाऽल्पकालीना प्रविशन्ती गृहं मुहुः । निरस्ता स्वर्णनिर्माल्यव्याजतः शाश्वतश्रिये ॥२६॥

तद्विलम्बः प्रलम्बः किं मर्मवेधी [5]कलम्बवत् । त्वया पूर्वं न दानेऽपि सूत्रिता [6]दीर्घसूत्रिता ॥२७॥

क्षमाधुर्यौ समाधुर्यौ सम्प्रधार्य तदूर्जितम् । नन्तुं प्रयातौ श्रीवीरं [7]पुष्पदन्ताविवोदितौ ॥ २८ ॥

व्यधत्तां श्रीमहावीरं प्रणम्याराधनाविधिम् । [8]शमिनौ संयमोत्तुङ्गप्रासादाग्रे ध्वजं किल ॥ २९ ॥

---

१ समितिभिः पक्षे संग्रामैः । संग्रामे हि वीरा जयं कृत्वा पानोत्सवं कुर्वन्ति इति लोके प्रसिद्धम् । २ अग्रेकृत्य पुरोहितं कृत्वा च । परिणीयते । ३ प्राप । ४ स्वर्गलक्ष्मीः । ५ बाणवत् । ६ चिरक्रिया । ७ सूर्याचन्द्रमसाविव । ८ धन्यशालिमुनी ।

मोहध्वंसिशुभध्यानयोधस्कन्धाविवाथ तौ । [1]सुवर्णपुष्पैः श्रीवीरः स्वयं स्वामी व्यभूषयत् ॥ ३० ॥
वत्सौ स्वस्थौ युवां धन्यौ कृतपुण्यौ सलक्षणौ । [2]सुलब्धं युवयोर्जन्म साधुसंयमजीवितम् ॥ ३१ ॥
पराक्रमं धनुः कृत्वा विनि[3]योज्याशुगं मनः । लक्ष्यध्यानावधानेन राधावेधो विधीयताम् ॥ ३२ ॥
तमेवं श्रीजिनादेशं [4]नेत्रपट्टमिवोज्ज्वलम् । शिरस्याधाय सामितिदीक्षां शिक्षामपि क्षणात् ॥
श्रीगौतमं पुरस्कृत्य वि[5]शुद्धाध्यवसायवत् । मैत्रीभावमिवोत्तुङ्गं वैभारगिरिमीयतुः ॥ ३४ ॥
शनैः शनैः समारुह्याधि[6]ष्ण्यकां मुदितामिव । माध्यस्थ्यमिव सौस्थ्याय प्रत्युपेक्ष्य शिलातलम् ॥
स्मृतपञ्चनमस्कारकृतपञ्चाङ्गि[7]रक्षणौ । क्षमायित्वा समग्रं च जन्तुजातं कुटुम्बवत् ॥ ३६ ॥
आहारांश्चतुरो हित्वा कषायानिव सर्वथा । [8]आशंसायाः प्रयोगांश्च चतुर्गतिगमानिव ॥ ३७ ॥
पादपोपगमं नामानशनं प्रतिपद्य तौ । निष्प्रकम्पौ बहिश्चान्तर्गिरिवत्तस्थतुः स्थिरौ (कलापकम्) ॥ ३८ ॥

---

१ पक्षे प्रधानाक्षरैः । २ प्रशस्यम् । ३ निवेश्य । बाणम् । क्रियताम् । ४ देशान्तरायातवस्त्रविशेषम् । ५ पवित्राध्यवसाय इव । ६ उपरितनभूमिकाम् । ७ साधूक्त्या; "पाडिलेहीकरी" । ८ इहलोकाशंसा, कामभोगाशंसा, परलोकाशंसा, अनुक्ताऽपि ज्ञेया ।

श्रीगौतममुनीन्द्रोऽपि मोहव्याधिचिकित्सकौ । तौ सत्याविव नासत्यौ मुनिसिंहावुपावृहत् ॥३९॥

इतो भद्रा निजावासे हर्षोत्कर्षवशंवदा । किङ्करैः कारयामास सुतागमनमङ्गलान् ॥ ४० ॥

अजिरे रेजिरे तत्र तोरणानां परम्पराः । अमन्दानन्दमाकन्दे वेल्लन्तः पल्लवा इव ॥ ४१ ॥

कौसुम्भं शुशुभे वासः सुतरामधितोरणम् । श्रीशालिभद्राभिमुखभक्तिरागसमप्रभम् ॥ ४२ ॥

हसन्तीव मुहुर्मुक्तास्वस्तिकस्तबका मही । धन्यशालिपदस्पृष्टा तद्दीक्षावञ्चिताः प्रियाः ॥ ४३ ॥

अथ भद्रास्नुषाः क्षामाः प्रियस्यैवानुकारतः । वसाना वाससी श्वेते श्रीशालेरिव कीर्तयः ॥४४॥

प्रेमक्षीरनिधेर्वेलाः श्रीचन्दनविलेपनैः । लता कृतयुगस्येवामुक्तमुक्ताफलव्रजैः ॥ ४५ ॥

नीरङ्गीच्छन्नवदनाः सदनाद्वन्दनाकृते । निश्चलाभक्तयश्चेलुः श्वश्रूमनु जिनं प्रति (विशेषकम्)॥४६॥

---

१ तथ्यौ; अश्विनीकुमाराविव । मुनिमुख्यौ; प्रशशंस । २ वशवर्तिनी । ३ शालिभद्रागमभद्रान् । ४ अङ्गणे । ५ "घाटडी" । ६ शालिदर्शनवञ्चिताः । ७ कृशाः सादृश्यात् । ८ परिदधाना । वस्त्रे । ९ एवमुत्प्रेक्षते । प्रेमक्षीरोर्नेधवलाः कल्लोला इव । १० कौसुम्भवस्त्रं, तेन च्छन्नं ढक्कितं वदनं यासां ताः ।

मया कामगवी गेहागता दण्डेन ताडिता । दत्त्वा कपाटौ व्यासेधि पूर्णकुम्भकरः करी ॥ ७३ ॥
सूनुर्महामुनिर्मासोपवासी स्वयमागतः । प्रत्यलाभि मया यन्न यावज्जीवमियं व्यथा ॥ ७४ ॥
हताऽहं हन्त! दग्धाऽहं स्वाङ्गजं यद्गृहाङ्गणे । नाजीगणं गणनया भिक्षुकस्यापि निर्गुणा ॥७५॥
त्वदागमोत्सवव्यग्रा त्वां नाज्ञासिषमागतम्। विवाहव्याकुलेवाहं व्यस्मार्षं पाणिपीडनम् ॥७६॥
नैवोत्तरमपि प्रादां तदा तद्वत्स! सांप्रतम्। उत्तरं तव नास्त्येव यज्जात! जगतीतले ॥ ७७ ॥
कुविजातं भवेत्प्रायः कुमाता नैतदप्यसत् । निर्ममोऽप्यागतः सद्म मयाऽदर्शि न पापया ॥७८॥
पूर्वं त्वदीयतातस्य वियोगेन तत्राप्यथ । पश्चात्तापैस्तवाभक्तेस्तापितं वह्निभिस्त्रिधा ॥ ७९ ॥
हतं घनैर्जनावाक्यैः स्फुटितं हृदयं न तत् । त्वदम्बाया निरालम्बं त्रिपरीक्षितवज्रति ॥ ८० ॥
वत्स! मातुः कलत्राणां परीक्षा वीक्षिता त्वया। धर्मस्येव तु धन्यस्य प्रीतिर्निर्वाहसुन्दरा ॥८१॥

---

१ निषिद्धः,। २ पुत्रम्। ३ संख्यया भिक्षाचरस्य। ४ व्याकुला। ५ युक्तम्। प्रधानपुत्रम्। ६ वज्र इवाचरतीति।

ततोऽभयकुमारेण समं श्रेणिकभूपतिः । श्रीवीरस्य नमस्यायै तत्रागाद्भद्रया सह ॥ ४७ ॥
स्वामिनं विधिवन्नत्वा भद्रा साधुसभामभि । वेलां प्रतीव कमठी ददर्श प्रीतिमतीं*दध्नौ ॥ ४८ ॥
पुरं स्वस्वजनेनेव सुभिक्षं स्वधनेन वा । सूनुना शून्यमालोक्य सदः सा खेदमासदत् ॥ ४९ ॥
साऽभिशङ्कमनाः सार्थवाही नाथं व्यजिज्ञपत् । क्व तौ नाथ ! सुचारित्रौ धन्यशालिमहामुनी ? ॥५०॥
साधु माधुकरीं वृत्तिं चरन्तौ चारुचर्यया । मद्गेहे हेतुना केन नायातौ† ममतोज्झितौ ? ॥५१॥
जगौ जगद्गुरुर्भद्रे ! स्वहितावहितौ हि तौ । मया वचनविज्ञानात् प्रहितौ तव वेश्मनि ॥५२॥
न निर्ध्यातवती पुत्रं ध्यायन्त्यपि तदागमम् । सुखेच्छुरिव सौख्यस्य मूलं धर्ममिव स्वकम् ॥
युष्मदुत्तरमप्राप्य वलितौ प्राग्भवाम्बया । धन्यया दत्तदध्ना तौ मासक्षपणपारणम् ॥ ५४ ॥
विधाय सह धन्येन सुज्ञानौ मदनुज्ञया । इदानीमेव वैभारे पादपोपगमं श्रितौ (युग्मम्) ॥

---

१ वीरवन्दनार्थम् । २ कच्छपी । "मढलां" । ३ सभाम् । ४ भद्रा, वीरं । ५ चारुगमनेन । ६ सावधानौ, हि निश्चये, अद्यमातुः पार्श्वात् पारणं भविष्यतीति वचोविज्ञानात् । ७ न दृष्टवती । ८ दधिना । ९ शोभनश्रुतौ । * प्रीतिमठीं इत्यपि पाठः † नागतौ इत्यपि पाठः ।

हास्येऽवश्यं सहायः स्यात् प्रायः पुंसां स्वसुः पतिः । जातः सुकृतकृत्येषु धन्यो धन्यतमस्तु ते ॥८२॥
जगतीमान्यसौजन्य ! तपःश्रीधन्य ! धन्य ! हे । सहकृत्वा त्वमेवासि मम पुत्रस्य संयमम् ॥ ८३ ॥
सुतादपि हि जामाता प्रियः स्त्रीणां मया तु हा । न दानं न च संमानं तुभ्यं नाप्युत्तरं ददे ॥ ८४ ॥
शालिभद्रस्वसा मन्ये सुभद्रा न ममाङ्गजा । यया पक्षत्रयी रत्नत्रयीव विमलीकृता ॥ ८५ ॥
आत्मानमित्युपालभ्य सर्वपर्वसु वञ्चितम् । प्रशशंस भृशं शालेर्मातरं पूर्वजन्मनः ॥ ८६ ॥
निर्वीराऽपि दरिद्राऽपि चिरायुरपि सा वरम् । दुग्धधौतैः हृदो नेत्रैः पुत्रत्वं लक्षितो यया ॥ ८७ ॥
अहं जीवन्मृता तात ! गृहकर्मणि कर्मठा । वत्सला न निजोत्सङ्गलालितेऽपि हहा त्वयि ॥ ८८ ॥
धन्या नान्याऽस्ति धन्याया या जन्मान्तरनन्दनम् । ऋजुरज्ञा मुनिं स्नेहात्प्रस्नुता प्रत्यलाभयत् ॥
अभद्राऽन्या न भद्राया वित्ते लोकोत्तरे यया । पुत्रे सर्वोत्तमे पात्रे नाददे दानशम्बलम् ॥ ९० ॥

---

१ सहकारी । २ मातुः पितुः पत्युश्च कुलत्रयम् । ज्ञानादिका । ३ निष्पतिसुता । धन्या । अन्तरङ्गनेत्रैः । ४ जीवन्ती चासौ मृता च तत्परा । ५ सरला । मूर्खा । स्तन्यं स्रवन्ती । विहारितः । ६ वित्ते प्रसिद्धे. पक्षे द्रव्ये च ।

साहाय्यादथवा यस्याः पुत्र ! ते संपदः शुभाः । त्वयाऽपि हेलया तस्यै पुण्यलाभः प्रकल्पितः[1] ॥
प्रथमं पायसं[2] सूनुरन्यूनं भोजितस्तया । परलोकं प्रतिष्ठासोः[3] कृतं च दधिमङ्गलम् ॥ ९२ ॥
आदेशकारिणी तस्याः केवलं प्रातिवेश्मिकी । अभिज्ञानेन[4] केनाहं प्रार्थये लाभमद्भुतम् ?॥९३॥
तथापि समतासिन्धो ! समसज्जनदुर्जन !। वासीचन्दनकल्पस्त्वमिति मामनुकम्पय ॥ ९४ ॥
हीनाया दीननेत्राया देहि प्रत्युत्तरं मम । निजाम्बिकां[5] हहा वत्स ! सम्भावय दृशाऽपि माम् ॥९५॥
एवं विविधभङ्गीभिर्भद्रा प्ररुदिता[6] सती । रोदसी[7] रोदयामास मृगपक्षिगणाकुलाम् ॥ ९६ ॥
शालेः शिलापरीरम्भा[8]रम्भकेलिं विलोक्य ताः । दधिरे विधुरास्[9]तस्य दयिताः परिदेवनम् ॥९७॥
हा प्राणवल्लभ ! प्रौढपुण्यैरपि सुदुर्लभ !। हा रूपविजितानङ्ग[10] ! हहा जीवितजीवित !॥ ९८ ॥

---

१ दत्तः । २ परमान्नं, । ३ जिगमिषोः । दधिदूर्वाऽक्षतादीनि द्रव्यमङ्गलमिति वचनात् । ४ चिह्नेन वाञ्छामि । ५ मातरं विलोकय । ६ प्रकर्षेण रुदिता । ७ द्यावापृथिव्यौ । ८ आश्लेषः । ९ दुःखिताः । पश्चात्तापम् । १० विजितकन्दर्प !।

गोभद्रस्य कुलेऽस्माकं सुकृतैस्त्वमवातरः । जीमूतवाहनस्येव गेहे कल्पद्रुमोऽर्थिनाम् ॥ ९९ ॥
अन्यथा क्व वयं नाथ ! मर्त्यलोकैककीटिकाः । भोगभङ्गी क्व सा दिव्याऽस्माकं स्वप्नेऽपि दुर्लभा ? ॥
परं प्राणेश ! निःसत्त्वाः किं ब्रूमो विदुषिब्रुवाः । प्रेमहेमतुलाकाले व्यञ्जिता गुञ्जया समाः ॥ १०१ ॥
अपि कल्याणरूपास्ते नाथ ! सेवाच्युता वयम् । भवकूपं पतिष्यामस्त्वदलंकृतयो यथा ॥ १०२ ॥
एकवृन्तादिवोत्खाताः गोभद्रस्य वधूटिकाः । लोकोक्तिरिति सत्यैवास्माकं निःसत्त्वतागुणैः ॥
एवं संवित्तिसंपन्ना निःस्नेहा निस्त्रपागुणाः । इयन्त्यो हन्त निःसत्त्वाः कुतो दैवेन संचिताः ? ॥१०४॥
एषाऽपकीर्त्तिरस्माकमायुगान्तं विजृम्भिता । यत्प्रियः प्राङ्गणस्थोऽपि न दृशाऽपि हि पस्पृशे ॥
पुनरेवैष्यति प्रेयान् प्रीत्याऽस्माभिः प्रणंस्यते । सोऽन्यसामान्यया हाऽस्मान् दृशा संभावयिष्यते ॥
एवमाशावशान्नाथ ! नीता द्वादशवत्सरी । अनेनानशनेनाशु ही ! विलीना मनोरथाः ॥ १०७ ॥

---

१ सुकृतैरिति अस्माकम् । आर्थिनां च कथनीयं, जीमूतराज्ञः । २ विच्छित्तिः । ३ कुत्सिता विदुषी वि० । ४ स्वर्ण, शुभं च । ५ प्रसृता । ६ भर्त्ता ।

प्राणनाथ! प्रसादात्ते प्रिया पृथ्वीपतेरपि । तदास्मानभ्यनीनन्दत् वणिक्कुलभवा अपि ॥१०८॥
त्वत्करस्पर्शपुण्येन दिव्याहारेण लालिताः। दिव्याङ्गरागमालाभिः स्वामिन्! दुर्ललिता[1] वयम् ॥१०९॥
देवीभूयमिव[2] प्राप्ताः किं तेनाविरता वयम्?। अनलम्भूष्णवः[3] कान्त! तवानुमरणेऽपि हा ॥११०॥
तदन्त्यां प्रार्थनां नाथ! नाथेमहि महीयसीम्। निजं वागमृतं हन्त हन्तकारः[4] प्रदीयताम् ॥१११॥
एवंप्रलपिता वीक्ष्य वधूसङ्घट्टघट्टिता। भद्रा मुमूर्च्छ मूर्च्छान्ते मुक्तकण्ठं रुरोद सा ॥ ११२ ॥
श्रीश्रेणिकनरेन्द्रस्तां विषादाविषमूर्छिताम् । चञ्चद्वचनपीयूषतुषारैर्निरवापयत् ॥ ११३ ॥
गुणैस्त्वं गणनीयाऽसि माननीयाऽसि मानिनाम्। वन्द्यानां वन्दनीयाऽसि महनीया[5] महात्मनाम्॥
नन्द्यास्त्वं नन्दनोर्वीव पारिजाततरुः सुतः । यस्यां पश्यावतीर्णोऽयं वरिवस्यः[6] सुरैरपि ॥११५॥
कल्याणि! तव कल्याणवर्णिकां निर्णयन्तु के । यत्सूः पुरुषकोटीरः पार्थिवार्थितसङ्गमः[7] ॥११६॥

---

१ दुरतिशयेन ललितं यासान्ताः। २ देवत्वम्। तेन कारणेन। ३ असमर्थाः। ४ सिद्धान्नपक्वान्नफलादीनां प्रथममतिथिब्राह्मणादीनां दानम्। ५ पूजनीयासि। ६ सेव्यः। ७ नृपरार्थितैः सङ्गमो यस्य।

सर्वदा नर्मदा भद्रा करेणुस्त्वं यदङ्गजः । गम्भीरवेदी पुन्नागो[3] मोहदुर्गस्य भञ्जकः ॥ ११७ ॥
सीमा सुकृतिनां चूला भोगसौभाग्यभागिनाम् । चूडामणिर्मुनीन्द्राणामहङ्कारवतामपि ॥ ११८ ॥
तेन प्रारम्भनिर्वाहधौरेयेण सुतेन ते । पतिव्रताव्रतं तीर्थं प्रभावेणेव कीर्त्तितम् (युग्मम्)॥११९॥
स्त्रीषु हाटकपट्टस्ते भालपट्टे निवेश्यताम् । सूता सिंहीव या मोहकुम्भिकण्ठीरवं सुतम् ॥१२०॥
तद् वृथा मा कृथाः शोकं भद्रे ! वीरप्रसूरासि । दृढं परिकरं बध्वा वधूभिः परिवारिता ॥१२१॥
धैर्यप्रोत्साहनावाक्यैर्मधुरैः सलिलैरिव । महाशमरसंरम्भे संप्रीणय निजाङ्गजम् ॥ १२२ ॥
श्रीश्रेणिकवचोभिस्तैर्भद्रा निन्ये रसान्तरम् । गुरूपदेशैः सद्भूतैश्चित्तवृत्तिरिवाधिकम् ॥ १२३ ॥
भद्रा शोकं पराभूय समाश्वास्य जनीजनम् । आशीर्वादैः सुधाऽऽस्वादैर्नन्दयामास नन्दनम् ॥१२४॥

---

१ नर्मदा रेवा नदी; नर्म हास्यं ददातीति नर्मदा च । २ अवगणिताङ्कुशः, पक्षे गम्भीरं वेत्तीति प्रधानपुरुषः । ३ गजः । ४ सौवर्णपट्टः । ५ महाशमरसम्; पक्षे हे रम्भे ! । ६ शान्तरसम् । सत्यैः । ७ निराकुल्य । धीरयित्वा । वधूजनम् ।

जय त्रिजगतीवीर ! जय वीरावतंसक ! । जय वीरविभोः शिष्य ! जय वीरपथाध्वग ! ॥१२५॥
मृत्तिकेव सुतीर्थस्य वन्द्याऽहं ते प्रसादतः । स्मरणीया जनानां तु वधूट्यो वनवीथिवत् ॥१२६॥
शिवास्ते सन्तु पन्थानः पारमार्थिकपान्थ हे ! । निष्प्रत्यूहं समभ्येतु साध्यसिद्धिः स्वयम्वरा ॥१२७॥
युवां संसारपारीणौ भूयास्तमस्तविस्तरौ । शाश्वतश्रीपरीरम्भसुभगम्भावुकस्थिती ॥१२८॥
भद्रेत्याशास्य रुदती स्वं च सन्धीरयन्त्यपि । शरद्द्यौरिव वर्षन्ती क्वापि क्वापि महोज्ज्वला ॥१२९॥
ततोऽभयकुमारेण धैर्येणेवाविलम्बिता । समं कुटुम्बनिर्वाहावष्टम्भेनेव भूभृता ॥ १३० ॥
परिष्कृता वधूटीभिः पुण्यप्रकृतिभिर्यथा । नगरं भवितव्यस्य नियोगमिव साऽविशत् (विशेषकम्)॥
व्यक्तं मुक्तामयौ युक्तौ तपःश्रीकुण्डलाविव । तौ वज्रकर्णिकासारौ वीर्यश्रीकङ्कणाविव ॥१३२॥
कल्यकल्याणरूपौ च ज्ञानश्रीनूपुराविव । निष्प्रकम्पौ शान्तिदान्त्योः क्रीडाभूमीधराविव ॥
धन्यः श्रीशालिभद्रश्च मुनिवृन्दारकौ ततः । परीषहोपसर्गादिवैरिवृन्दविदारकौ ॥ १३४ ॥

१ वनसमूहवत् । २ निरुपद्रवाः । मार्गाः । ३ पारकौ । गतविलम्बौ । ४ "कल्यो नीरोगदक्षयोः" ।

[1]गुरुगौतमनिर्यामं संन्यासं पोतमास्थितौ । भावनित्यगतेर्वेगाद् ध्रुवध्यानप्रमाणतः ॥ १३५ ॥
सुदुस्तरमतिक्रम्य प्रतिज्ञाभरनीरधिम् । [2]कल्पानल्पाश्रियोऽतीत्य स्वामिसेवाकदर्थितान् ॥ १३६ ॥
अभव्यैरपि संभाव्यवैभवानुभवानहो । अधिकारानिवोत्सृज्य नवग्रैवेयकानपि ॥ १३७ ॥
सिद्धेः [3]शाखापुरे किं वा वेशविश्रामशाखिनि । विवोढुं शाश्वतीं लक्ष्मीं जन्यावासेऽथवाऽङ्गणे ॥१३८॥
अनुत्तरसुखागारे तौ पञ्चानुत्तरोत्तरे । महाविमाने सर्वार्थसिद्धेऽभूतां सुरोत्तमौ (अष्टभिः कुलकम्) ॥
नात्रान्यस्वामिनामापि तदवस्थीयतामिति । शालिमस्थापयल्लक्ष्मीर्निरुत्तरमनुत्तरा ॥ १४० ॥
आत्रयस्त्रिंशतं वार्द्धीन्[4] सौख्याम्भोधिगयोरपि । नाभ्याययुरभिष्वङ्गतरङ्गाः पुनरेतयोः ॥१४१॥

व्यामोहेन महाहिमेन मथितं नो मायया लूकया
कोपेन प्रबलातपेन न मदैरोगाभियोगैरिव ।

---

१ निर्यामः कर्णधारः; पक्षे "नीजामणहार" । नित्यगतिर्वायुः । ध्रुवं निश्चलं यद् ज्ञानं; पक्षे निश्चलध्रुवतारा ।
२ द्वादशदेवलोकान् । ३ पुरस्य समीपं यदुपपुरं तदेव शाखापुरं तस्मिन् । प्रवेशः । ४ सागरोपमानानि । मोहकल्लोलाः ।

पश्चात्तापभरैर्विहङ्गनिकरैर्नासूयया वात्यया[1]
सौख्यं सौमनसं[2] वनं तदनयोर्लोकोत्तरं कीर्त्यते ॥ १४२ ॥

ब्रह्मज्योतिरिव स्वयं समुदितं[3] नोपाधिसंसाधितं
पीवज्जीवमिवोपजीव्यमिह नो नासारसंज्ञादिभिः।
निष्प्रत्यूहसमूहमुज्ज्वलकलश्रीकेवलालोकवद्
द्वैता[4]तीतमहोमहोदयसखं तावन्वभूतां सुखम् ॥ १४३ ॥

दुष्कर्म ताभ्यां तु पुरा[5] विदेहे जन्माधिगम्याथ पुराविदेहे।
निरन्तरानन्दसदाविदेहे प्रयास्यतस्तौ हि पदे विदेहे ॥ १४४ ॥

अनुत्तरं[6] दानमनुत्तरश्रियोऽप्यनुत्तरं मानमनुत्तरं यशः।

---

१ वायुसमूहेन। २ देवयोग्यम्। ३ उपचितम्। ४ एकम्। ५ पूर्वजन्मनि, दग्धम्, दहं भस्मीकरणे; पूर्वविदेहे क्षेत्रे जन्म प्राप्य, दिहींक् लेपे, विदेहः उपचयः सदानन्दस्योपचयो यस्मिन्; देहरहितपदे कोऽर्थः मोक्षपदे। ६ सर्वोत्कृष्टं पदं; अनुत्तरविमानाख्यं वा।

श्रीशालिभद्रस्य गुणा अनुत्तरा अनुत्तरं धैर्यमनुत्तरं पदम् ॥ १४५॥

जयतु शमसमुद्रः प्राप्तमौनीन्द्रमुद्रः[1]; कलिकलुषदरिद्रस्त्यक्तसंमोहनिद्रः।
मदनदमनरुद्रः सर्वतो भाविभद्रः; शिवपथरथभद्रः[2] श्रीमुनिः शालिभद्रः॥ १४६ ॥

श्रीशालिर्गुरुराजकुञ्जरवराध्यारूढया प्रौढया
श्रीमद्धर्मधराधिपप्रहितया वैराग्यभङ्ग्या स्वयम्।
स्वीचक्रे गजमुद्रयेव[3] सहसा सर्वार्थसिद्ध्यैव य-
स्तस्यैतच्चरितं सतां प्रदिशतां कल्याणमालाश्रियः॥ १४७ ॥

प्रस्तुतं[4] दानधर्मेण श्रीशालिचरितं शुभम्। गोभद्रेण श्रीविबुधप्रभेण तु विशेषितम् ॥१४८॥
श्रीमद्भद्रेश्वरे वीरपादोपान्ते समर्थितम् । भूयात्सकर्णकर्णानाममृतप्रातराशवत्[5] ॥ १४९ ॥

---

१ मुनीन्द्रस्येयं मौनीन्द्रा सा चासौ मुद्रा च, प्राप्ता मौनीन्द्रमुद्रा येन सः। रहितः। २ भद्रो वृषभः। ३ नृपेण गजमुद्रा गजारूढश्रीकरणाय प्रहीयते। ४ प्रारब्धम्, दानरूपो मासोपवासिनः यतेः क्षीरदानधर्मस्तेन, "श्रीदानधर्मकल्पद्रुः" इतः प्रारब्धम्, गोभद्रनामा सुरः; पक्षे वृषभेण। ५ "कलेवउं"

श्रीनागेन्द्रमुनीन्द्रवंशविपुलक्षीरार्णवैरावणाः

श्रीहेमप्रभसूरयः प्रसृमरश्रीकीर्त्तिसारांराविणाः ।

तत्पट्टे प्रभुधर्मघोषगुरवो रेजुः स्फुरद्गौरवाः

श्रीसोमप्रभसूरयस्तरणयस्तत्पट्टपूर्वाचले ॥ १५० ॥

ब्रह्माणः किल भारती श्रितवती यत्कण्ठपीठीमठीं

गोविन्दाः कमला यदंह्रिकमलासेवासु हेवाकिनी ।

ईशानाः किमु गङ्गयेव महिता गौर्या सुकीर्त्या च ये

श्रीसोमप्रभसूरयः सुमनसां मूर्द्धन्यतां ते दधुः ॥ १५१ ॥

तत्पट्टाचलचूलिका विजयते दम्भाख्यजम्भाजित-

श्रीः श्रीमान् विबुधप्रभः प्रभुरसौ सुज्ञानलीनाशयः ।

---

१ सुरगजाः पूर्ववत् साधनिका । २ कृष्णाः, तत्परा । ३ ईश्वराः; शुभ्रया च । मुकुटत्वम् । ४ दम्भाभिधान एव जम्भदैत्यस्तेनाजिता श्रीर्यस्य, गुरवः; पक्षे इन्द्रः ।

तस्य प्राप्य निदेशलेशमनिशं गीर्देवताध्यानत-
श्चक्रे धर्मकुमारसाधुरमलां श्रीशालिलीलाकथाम् ॥१५२॥

इयं कथा वृद्धकुमारिकेव सदूषणा भूषणवर्जिताऽऽसीत् ।
प्रद्युम्नदेवस्य[1] परं प्रसादात् बभूव पाणिग्रहणस्य योग्या ॥ १५३ ॥

प्रभाचन्द्रेण गणिना गुणगौरवशालिना । अलेखि प्रथमादर्शे[2] भक्तिव्यक्तिनिदर्शनम् ॥ १५४ ॥

यावद्दानदिवाकरः शुभदिनश्रीसौविदल्लो[3]ऽर्हत-
स्तीर्थे पूर्वगिरावुदेति तिमिरध्वंसी[4] विवेकारुणः ।
स्फीता तावदियं यतिक्षितिपतेः[5] श्रीशालिभद्रप्रभो-
र्बुद्धैर्बोधकरैः[6] सुमङ्गलकलाभोगावली कीर्त्यताम् ॥ १५५ ॥

---

१ प्रद्युम्नसूरयः; कामश्च । विवाहो हस्तग्रहणयोग्यता च । २ प्रथमप्रतौ । दृष्टान्तः । ३ कञ्चुकी स्त्रीरक्षाकरः; यवनेषु ‘खुसरा’ इति प्रसिद्धिः। सूर्यसारथिः । ४ पापध्वंसी। ५ साधुनृपतेः । ६ पक्षे बोधकरा वैतालिकास्तेऽपि भोगावल्यभिधं ग्रन्थं पठन्ति ।

श्रीशालिचरिते धर्मकुमारसुधिया कृते ।
श्रीप्रद्युम्नधिया शुद्धे सप्तमः प्रक्रमोऽभवत् ॥ १५६ ॥

अयं दानमहाधर्मः कल्पद्रुम इवाद्भुतः ।
भूयात्समस्तभव्यानां मनोवाञ्छितसिद्धये ॥ १५७ ॥

ब्राह्मी निर्मलशब्दसिद्धिकलिता मन्ये पवित्राशया
लक्ष्मीर्वा पुरुषोत्तमप्रियतमा नानार्थजातप्रसूः ।
गौरी मङ्गलशालिभद्रचरिता सर्वप्रियम्भावुका
जीयाद्धर्मकुमारपण्डितमतिर्विस्तारि[1]धर्मोन्नतिः ॥ १५८ ॥

**इति श्रीशालिभद्रचरिते सर्वार्थसिद्धिसंप्राप्तिवर्णनो नाम सप्तमः प्रक्रमः ॥**

जिनातिशययक्षाख्यवत्सरे[2] विहिता कथा ।
ग्रन्थेन द्वादशशती चतुर्विंशातिसंयुता ॥ १ ॥

---

१ विस्तरणशीला धर्मोन्नतिर्यस्यां सा । २ (१३३४) वर्षे ।

११. श्रीसिद्धहेमशब्दानुशासनसूत्रपाठस्याकारादिक्र-
मेण सूचीपत्रम् । ०-४-०

१२. कविकल्पद्रुमः-श्रीहर्षकुलगणिविरचितः। आर्य्या-
छन्दसा निबद्धोऽयं ग्रन्थो धातुतदर्थतदनुबन्धा-
दिप्रबोधको विद्यार्थिजनानामुपकारकः ०-४-०

१३. सम्मतितर्काख्यप्रकरणस्य-प्रथमो विभागः-श्री-
सिद्धसेनदिवाकररचितः। श्रीराजगच्छीयाभय-
देवसूरिरचितया तत्त्वबोधविधायिन्या व्याख्य-
या विभूषितः। अयं ग्रन्थो जैनदार्शनिकविषयस्य
सम्यग्विवेचकः सकलन्यायग्रन्थानां मौलिमु-
कुटतामावहति । ३-०-०

१४. जगद्गुरुकाव्यम्-श्रीपद्मसागरगणिविरचितम् ।
अस्मिन् खण्डकाव्ये जगद्गुरोः श्रीहीरविजय-
सूरेः संक्षिप्तमपि रसपरिपूर्णं जीवनचरितं वर्णि-
तं। पूज्यसूरेः श्रीमदकब्बरराजेन सह जातायाः
धर्मचर्चाया मनोहरं वृत्तान्तमपि वर्णितमस्ति ।
ग्रन्थकर्त्रा नेदं काव्यं ऐतिहासिकदृष्ट्याऽपि
समीचीनतया प्रतिपादितम् । यस्य पठनेन सर्वं
स्वयमेवाविर्भविष्यतीत्यलं बहुना । ०-४-०

१५. श्रीशालिभद्रचरितम्-टिप्पणसहितं श्रीधर्मकुमार-
सुधिया विरचितम् । अपूर्वोऽयं कथाग्रन्थो महा-
काव्यशब्दप्रतिपाद्यः । १-४-०

१६. न्यायसंग्रहः-न्यायार्थमञ्जूषाख्यबृहद्वृत्तिन्यासादि-
सहितः । सकलन्यायानां (परिभाषाणां) ज्ञाप-
कादिबोधकोऽयं ग्रन्थः । कर्ताऽस्य श्रीहेम-
हंसगणिः । ३-०-०

